संक्षिप्तम्

# वाल्मीकीय-रामायणम्

डा० श्रीरवीन्द्रनाथठाकुरेण सम्पादितम्

तच्च

प्रयागनगरे, इंडियन प्रेस, नाम्नि यन्त्रालये

तदध्यक्षेण मुद्रापयित्वा

प्रकाशितम्

 १९१५ [मूल्यं रूप्यकमेकम्

परिवर्त्य परिदृश्य च मतवैषम्यं संशयेन दोलाचलचित्त-वृत्तिभिः विहायोत्तरकाण्डम्, युद्धकाण्डपर्यन्तम्, अति-सुकुमारमतीनाम्, बालानाम्, सुखबोधाय ताँश्चाभिमुखीकर्त्तुं यथामति क्रममनतिक्रम्य, वाल्मीकीयान् श्लोकानेवादाय रामायणस्य मूलोपाख्यानं संक्षिप्तरामायणमिति नाम्ना परिकल्प्य सकलितमस्माभिः। शिशून्पाठयन्तो यथामति—परिसंशोधितमेतदवलोकयन्तोऽनन्तगुणगरीयांसो विद्वांसः पुरुषसाधारणमनश्चाञ्चल्यादनवधानतया चात्र यत्किञ्चित्स्खलितं कृपया तत्सर्वं परिसंशोधयन्तो जनतामुपकुर्वन्तु, अनुगृह्णन्त्वस्मानिति सानुनयम्प्रार्थयते। अलमतिविस्तरेण।

श्रीरमेशचंद्र-भट्टाचार्यः

शांतिनिकेतन-बोलपुरवासी।

## संक्षिप्तम्

# वाल्मीकीय-रामायणम्

यावत्स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ।।
कोशलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ।।
अयोध्या नाम नगरी तत्रासील्लोकविश्रुता ।
मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ।।
तस्यां पुर्यामयोध्यायां वेदवित्सर्वसंग्रहः ।
दीर्घदर्शी महातेजा. पौरजानपदप्रियः ।।
इक्ष्वाकूणामतिरथो यज्वा धर्मपरो वशी ।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ।।
बलवान्निहता-मित्रो मित्रवान्विजितेन्द्रियः ।
धनैश्च संचयैश्चान्यैः शक्रवैश्रवणोपमः ।।

यथा मनुर्महातेजा लोकस्य परिरक्षिता ।
तथा दशरथो राजा लोकस्य परिरक्षिता ॥
तस्य चैवंप्रभावस्य धर्मज्ञस्य महात्मनः ।
सुतार्थं तप्यमानस्य नासीद्वंशकरः सुतः ॥
चिन्तयानस्य तस्यैवं बुद्धिरासीन्महात्मनः ।
सुतार्थं वाजिमेधेन किमर्थं न यजाम्यहम् ॥
ततो वसिष्ठप्रमुखाः सर्व एव द्विजोत्तमाः ।
ऋष्यशृङ्गं पुरस्कृत्य यज्ञकर्मारभंस्तदा ।
यज्ञवाट गताः सर्वे यथाशास्त्रं यथाविधि ।
श्रीमांश्च सहपत्नीभी राजा दीक्षामुपाविशत् ॥
ततो वै यजमानस्य पावकादतुलप्रभम् ।
प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ॥
कृष्णं रक्ताम्बरधरं रक्तास्यं दुन्दुभिस्वनम् ।
स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्द्धजम् ॥
दिव्यपायससंपूर्णां पात्रीं पत्नीमिव प्रियाम् ।
प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव ॥
समवेक्ष्याब्रवीद्वाक्यमिदं दशरथं नृपम् ।
प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप ॥
ततः परं तदा राजा प्रत्युवाच कृताञ्जलिः ।
भगवन्स्वागतं तेऽस्तु किमहं करवाणि ते ॥
अथो पुनरिदं वाक्यं प्राजापत्यो नरोऽब्रवीत् ।
राजन्नर्चयता देवानद्य प्राप्तमिदं त्वया ॥

इदं तु नृपशार्दूल पायसं देवनिर्मितम् ।
प्रजाकरं गृहाण त्वं धान्यमारोग्यवर्धनम् ॥
भार्याणामनुरूपाणामश्नीतेति प्रयच्छ वै ।
तासु त्व लप्स्यसे पुत्रान्यदर्थं यजसे नृप ॥
तथेति नृपतिः प्रीतः शिरसा प्रतिगृह्य ताम् ।
पात्रीं देवान्नसंपूर्णां देवदत्तां हिरण्मयीम् ॥
अभिवाद्य च तद्भूतमद्भुतं प्रियदर्शनम् ।
मुदा परमया युक्तश्चकाराभिप्रदक्षिणम् ॥
ततस्तदद्भुतप्रख्यं भूतं परमभास्वरम् ।
संवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत ॥
सोऽन्तःपुरं प्रविश्यैव कौसल्यामिदमब्रवीत् ।
पायसं प्रतिगृह्णीष्व पुत्रीयं त्विदमात्मन' ॥
कौसल्यायै नरपतिः पायसार्धं ददौ तदा ।
अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ॥
कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् ।
प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ॥
अनुचिन्त्य सुमित्रायै पुनरेव महामतिः ।
एवं तासां ददौ राजा भार्याणां पायसं पृथक् ॥
ताश्चैवं पायसं प्राप्य नरेन्द्रस्योत्तमस्त्रियः ।
संमानं मेनिरे सर्वाः प्रहर्षोदितचेतसः ॥
ततस्तु ताः प्राश्य तमुत्तमस्त्रियो महीपतेरुत्तमपायसं पृथक् ।
हुताशनादित्यसमानतेजसोऽचिरेण गर्भान्प्रतिपेदिरे तदा ॥

ततस्तु राजा प्रतिवीक्ष्य ताः स्त्रियः प्ररूढगर्भाः प्रतिलब्धमानसः
बभूव हृष्टस्त्रिदिवे यथा हरिः सुरेन्द्रसिद्धर्षिगणाभिपूजितः ॥

ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ।
कौसल्याजनयद्रामं दिव्यलक्षणसंयुतम् ॥
भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः ।
साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः ॥
अथ लक्ष्मणशत्रुघ्नौ सुमित्राजनयत्सुतौ ।
वीरौ सर्वास्त्रकुशलौ विष्णोरर्धसमन्वितौ ॥
सर्वे वेदविदः शूराः सर्वे लोकहिते रताः ।
सर्वे ज्ञानोपसंपन्नाः सर्वे समुदिता गुणैः ॥
तेषामपि महातेजा रामः सत्यपराक्रमः ।
धनुर्वेदे च निरतः पितुः शुश्रूषणे रतः ॥
बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः ।
रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ॥
सर्वप्रियकरस्तस्य रामस्यापि शरीरतः ।
लक्ष्मणो लक्ष्मिसंपन्नो बहिः प्राण इवापरः ॥
न च तेन विना निद्रां लभते पुरुषोत्तमः ।
मृष्टमन्नमुपानीतमश्नाति न हि तं विना ॥
यदा हि हयमारूढो मृगयां याति राघवः ।
अथैनं पृष्ठतोऽभ्येति सधनुः परिपालयन् ॥
भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हि सः ।
प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः ॥

स चतुर्भिर्महाभागैः पुत्रैर्दशरथः प्रियैः ।
बभूव परमप्रीतो देवैरिव पितामहः ॥
ते यदा ज्ञानसंपन्नाः सर्वे समुदिता गुणैः ।
ह्रीमन्तः कीर्तिमन्तश्च सर्वज्ञा दीर्घदर्शिनः ॥
तेषामेवंप्रभावाणां सर्वेषां दीप्ततेजसाम् ।
पिता दशरथो हृष्टो ब्रह्मा लोकाधिपो यथा ॥
ते चापि मनुजव्याघ्रा वैदिकाध्ययने रताः ।
पितृशुश्रूषणरता धनुर्वेदे च निष्ठिताः ॥
अथ राजा दशरथस्तेषां दारक्रियां प्रति ।
चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः ॥
तस्य चिन्तयमानस्य मन्त्रिमध्ये महात्मनः ।
अभ्यागच्छन्महातेजा विश्वामित्रो महामुनिः ॥
स राज्ञो दर्शनाकांक्षी द्वाराध्यक्षानुवाच ह ।
शीघ्रमाख्यात मां प्राप्तं कौशिकं गाधिनः सुतम् ॥
तच्छ्रुत्वा वचनं तस्य राज्ञो वेश्म प्रदुद्रुवुः ।
संभ्रान्तमनसः सर्वे तेन वाक्येन चोदिताः ॥
ते गत्वा राजभवनं विश्वामित्रमृषिं तदा ।
प्राप्तमावेदयामासुर्नृपायेक्ष्वाकवे तदा ॥
तेषां तद्वचनं श्रुत्वा सपुरोधाः समाहितः ।
प्रत्युज्जगाम संहृष्टो ब्रह्माणमिव वासवः ॥
स दृष्ट्वा ज्वलितं दीप्त्या तापसं संशितव्रतम् ।
प्रहृष्टवदनो राजा ततोऽर्घ्यमुपहारयत् ।

स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्मणा ।
कुशलं चाव्ययं चैव पर्यपृच्छन्नराधिपम् ॥
पुरे कोशे जनपदे बान्धवेषु सुहृत्सु च ।
कुशलं कौशिको राज्ञः पर्यपृच्छत्सुधार्मिकः ॥
अपि ते संनताः सर्वे सामन्तरिपवो जिताः ।
दैवं च मानुषं चैव कर्म ते साध्वनुष्ठितम् ॥
वसिष्ठं च समागम्य कुशलं मुनिपुंगवः ।
ऋषींश्च तान्यथान्याय महाभाग उवाच ह ॥
ते सर्वे हृष्टमनसस्तस्य राज्ञो निवेशनम् ।
विविशुः पूजितास्तेन निषेदुश्च यथार्हतः ॥
अथ हृष्टमना राजा विश्वामित्रं महामुनिम् ।
उवाच परमोदारो हृष्टस्तमभिपूजयन् ॥
यथामृतस्य संप्राप्तिर्यथा वर्षमनूदके ।
यथा सदृशदारेषु पुत्रजन्माप्रजस्य वै ॥
प्रनष्टस्य यथा लाभो यथा हर्षो महोदयः ।
तथैवागमनं मन्ये स्वागतं ते महामुने ॥
कं च ते परमं कामं करोमि किमु हर्षितः ।
तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् ॥
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ।
सदृशं राजशार्दूल तवैव भुवि नान्यतः ॥
महावंशप्रसूतस्य वसिष्ठव्यपदेशिनः ।
यत्तु मे हृद्गतं वाक्यं तस्य कार्यस्य निश्चयम् ॥

कुरुष्व राजशार्दूल भव सत्यप्रतिश्रवः ।
अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ ॥
तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ ।
व्रते तु बहुशश्चीर्णे समाप्त्यां राक्षसाविमौ ॥
मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ।
तौ मांसरुधिरौघेण वेदिं तामभ्यवर्षताम् ॥
अवधूते तथाभूते तस्मिन्नियमनिश्चये ।
कृतश्रमो निरुत्साहस्तस्माद्देशादपाक्रमे ॥
न च मे क्रोधमुत्स्रष्टुं बुद्धिर्भवति पार्थिव ।
तथाभूता हि सा चर्या न शापस्तत्र मुच्यते ॥
स्वपुत्रं राजशार्दूल रामं सत्यपराक्रमम् ।
काकपक्षधरं वीरं ज्येष्ठं मे दातुमर्हसि ॥
शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ।
राक्षसा ये विकर्तारस्तेषामपि विनाशने ।
तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम् ॥
मुहूर्तमिव निःसंज्ञः संज्ञावानिदमब्रवीत् ।
ऊनषोडशवर्षो मे रामो राजीवलोचनः ॥
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ।
अहमेव धनुष्पाणिर्गोप्ता समरमूर्द्धनि ॥
यावत्प्राणान् धरिष्यामि तावद्योत्स्ये निशाचरैः ।
निर्विघ्ना व्रतचर्या सा भविष्यति सुरक्षिता ॥
अहं तत्र गमिष्यामि न रामं नेतुमर्हसि ॥

तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलाक्षरम् ॥
समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ।
पूर्वमर्थं प्रतिश्रुत्य प्रतिज्ञां हातुमिच्छसि ॥
राघवाणामयुक्तोऽयं कुलस्यास्य विपर्ययः ।
यदीदं ते क्षमं राजन्गमिष्यामि यथागतम् ॥
मिथ्याप्रतिज्ञः काकुत्स्थ सुखी भव सुहृद्वृतः ।
तस्य रोषपरीतस्य विश्वामित्रस्य धीमतः ॥
चचाल वसुधा कृत्स्ना देवानां च भयं महत् ।
त्रस्तरूपं तु विज्ञाय जगत्सर्वं महानृषि. ॥
नृपतिं सुव्रतो धीरो वसिष्ठो वाक्यमब्रवीत् ।
इक्ष्वाकूणां कुले जात. साक्षाद्धर्म इवापरः ॥
धृतिमान्सुव्रतः श्रीमान्न धर्मं हातुमर्हसि ।
त्रिषु लोकेषु विख्यातो धर्मात्मा इति राघवः ॥
स्वधर्मं प्रतिपद्यस्व नाधर्मं वोढुमर्हसि ।
तथा वसिष्ठे ब्रुवति राजा दशरथः स्वयम् ॥
प्रहृष्टवदनो राममाजुहाव सलक्ष्मणम् ।
कृतस्वस्त्ययनं मात्रा पित्रा दशरथेन च ॥
पुरोधसा वसिष्ठेन मङ्गलैरभिमन्त्रितम् ।
स पुत्रं मूर्ध्न्युपाघ्राय राजा दशरथस्तदा ॥
ददौ कुशिकपुत्राय सुप्रीतेनान्तरात्मना ।
ततो वायुः सुखस्पर्शो नीरजस्को ववौ तदा ॥
विश्वामित्रगतं रामं दृष्ट्वा राजीवलोचनम् ।

पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिःस्वनैः ॥
शङ्खदुन्दुभिनिर्घोषः प्रयाते तु महात्मनि ।
विश्वामित्रो ययावग्रे ततो रामो महायशाः ॥
काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात् ।
ततः प्रभाते विमले कृताह्निकमरिंदमौ ॥
विश्वामित्रं पुरस्कृत्य नद्यास्तीरमुपागतौ ।
ते च सर्वे महात्मानो मुनयः संशितव्रताः ॥
उपस्थाप्य शुभां नावं विश्वामित्रमथाब्रुवन् ।
आरोहतु भवान्नावं राजपुत्रपुरस्कृतः ॥
अरिष्टं गच्छ पन्थानं मा भूत्कालस्य पर्ययः ।
विश्वामित्रस्तथेत्युक्त्वा तानृषीन्प्रतिपूज्य च ॥
ततार सहितस्ताभ्यां सरितं सागरंगमाम् ।
तीरं दक्षिणमासाद्य जग्मतुर्लघुविक्रमौ ॥
स वनं घोरसंकाशं दृष्ट्वा नरवरात्मज ।
अविप्रहतमैक्ष्वाकः पप्रच्छ मुनिपुंगवम् ॥
अहो वनमिदं दुर्गं झिल्लिकागणसंयुतम् ।
भैरवैः श्वापदैः कीर्णं शकुन्तैर्दारुणारवैः ॥
नानाप्रकारैः शकुनैर्वाश्यद्भिर्भैरवस्वनैः ।
सिंहव्याघ्रवराहैश्च वारणैश्चापि शोभितम् ॥
धवाश्वकर्णककुभैर्बिल्वतिन्दुकपाटलैः ।
संकीर्णं बदरीभिश्च किं न्विदं दारुणं वनम् ॥
तमुवाच महातेजा विश्वामित्रो महामुनिः ।

श्रूयतां वत्स काकुत्स्थ यस्यैतद्दारुणं वनम् ॥
एतौ जनपदौ स्फीतौ पूर्वमास्तां नरोत्तम ।
मलदाश्च करूषाश्च देवनिर्माणनिर्मितौ ॥
कस्यचित्त्वथ कालस्य यक्षिणी कामरूपिणी ।
बल नागसहस्रस्य धारयन्ती तदा ह्यभूत् ॥
ताटका नाम भद्रं ते भार्या सुन्दस्य धीमत ।
मारीचो राक्षसः पुत्रो यस्या· शक्रपराक्रम ॥
वृत्तबाहुर्महाशीर्षो विपुलास्यतनुर्महान् ।
राक्षसो भैरवाकारो नित्यं त्रासयते प्रजा ॥
इमौ जनपदौ नित्यं विनाशयति राघव ।
मलदांश्च करूषांश्च ताटका दुष्टचारिणी ॥
सेय पन्थानमावृत्य वसत्यत्यर्धयोजने ।
अत एव च गन्तव्यं ताटकाया वनं यत· ॥
स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम् ।
मन्नियोगादिमं देश कुरु निष्कण्टकं पुन· ॥
नहि कश्चिदिमं देशं शक्तो ह्यागन्तुमीदृशम् ।
यक्षिण्या घोरया राम उत्सादितमसह्यया ॥
एतत्ते सर्वमाख्यातं यथैतद्दारुणं वनम् ।
यक्ष्या चोत्सादितं सर्वमद्यापि न निवर्तते ॥
मुनेर्वचनमक्लीब श्रुत्वा नरवरात्मजः ।
राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच दृढव्रतः ॥
सोऽहं पितुर्वचः श्रुत्वा शासनाद्ब्रह्मवादिनः ।

करिष्यामि न संदेहस्ताटकावधमुत्तमम् ॥
गोब्राह्मणहितार्थाय देशस्य च हिताय च ।
तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः ॥
एवमुक्त्वा धनुर्मध्ये बद्ध्वा मुष्टिमरिंदम. ।
ज्याघोषमकरोत्तीव्र दिश· शब्देन नादयन् ॥
तेन शब्देन वित्रस्तास्ताटकावनबासिनः ।
ताटका च सुसंक्रुद्धा तेन शब्देन मोहिता ॥
त शब्दमभिनिध्याय राक्षसी क्रोधमूर्च्छिता ।
श्रुत्वा चाभ्यद्रवत्क्रुद्धा यत्र शब्दो विनिःसृत ॥
विश्वामित्रस्तु ब्रह्मर्षिहुंकारेणाभिभर्त्स्य ताम् ।
स्वस्ति राघवयोरस्तु जयं चैवाभ्यभाषत ॥
उद्धून्वाना रजो घोर ताटका राघवावुभौ ।
रजोमेघेन महता मुहूर्तं सा व्यमोहयत् ॥
ततो मायां समास्थाय शिलावर्षेण राघवौ ।
अवाकिरत्सुमहता ततश्चुक्रोध राघवः ॥
शिलावर्षं महत्तस्याः शरवर्षेण राघवः ।
प्रतिवार्योपधावन्त्या· करौ चिच्छेद पत्रिभि ॥
ततश्छिन्नभुजां श्रान्तामभ्याशे परिगर्जतीम् ।
सौमित्रिरकरोत्क्रोधाद्धृतकर्णाग्रनासिकाम् ॥
अभिदुद्राव काकुत्स्थं लक्ष्मणं च विनेदुषी ।
तामापतन्तीं वेगेन विक्रान्तामशनीमिव ॥
शरेणोरसि विव्याध पपात च ममार च ।

तां हतां भीमसंकाशां दृष्ट्वा सुरपतिस्तदा ॥
साधु साध्विति काकुत्स्थ सुराश्चाप्यभिपूजयन् ।
उवाच परमप्रीतः सहस्राक्षः पुरंदरः ॥
ततो मुनिवरः प्रीतस्ताटकावधतोषितः ।
मूर्ध्नि राममुपाघ्राय इदं वचनमब्रवीत् ॥
इहाद्य रजनीं राम वसाम शुभदर्शन ।
श्वः प्रभाते गमिष्यामस्तदाश्रमपदं मम ॥
विश्वामित्रवचः श्रुत्वा हृष्टो दशरथात्मज. ।
उवास रजनीं तत्र ताटकाया वने सुखम् ॥
अथ तां रजनीं तत्र कृतार्थौ रामलक्ष्मणौ ।
ऊषतुर्मुदितौ वीरौ प्रहृष्टेनान्तरात्मना ॥
प्रभातायां तु शर्वर्यां कृतपौर्वाह्णिकक्रियौ ।
विश्वामित्रमृषींश्चान्यान्सहितावभिजग्मतुः ॥
अभिवाद्य मुनिश्रेष्ठं ज्वलन्तमिव पावकम् ।
ऊचतुः परमोदारंवाक्यं मधुरभाषिणौ ॥
इमौ स्म मुनिशार्दूल किंकरौ समुपागतौ ।
आज्ञापय मुनिश्रेष्ठ शासनं करवाव किम् ॥
एवमुक्ते तयोर्वाक्ये सर्वे एव महर्षयः ।
विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन् ॥
मैथिलस्य नरश्रेष्ठ जनकस्य भविष्यति ।
यज्ञः परमधर्मिष्ठस्तत्र यास्यामहे वयम् ॥
त्वं चैव नरशार्दूल सहास्माभिर्गमिष्यसि ।

अद्भुतं च धनूरत्नं तत्र त्वं द्रष्टुमर्हसि ॥
तद्धि पूर्वं नरश्रेष्ठ दत्तं सदसि दैवतै· ।
अप्रमेयबलं घोरं मखे परमभास्वरम् ॥
नास्य देवा न गन्धर्वा नासुरा न च राक्षसाः ।
कर्तुमारोपणं शक्ता न कथंचन मानुषाः ॥
एवमुक्त्वा मुनिवरः प्रस्थानमकरोत्तदा ।
सर्षिसङ्घ· स काकुत्स्थ आमन्त्र्य वनदेवताः ॥
ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ।
वासं चक्रुर्मुनिगणाः शोणाकूले समाहिता ॥
उपास्य रात्रिशेषं तु शोणाकूले महर्षिभिः ।
निशायां सुप्रभातायां विश्वामित्रोऽभ्यभाषत ॥
सुप्रभाता निशा राम पूर्वा संध्या प्रवर्तते ।
उत्तिष्ठोत्तिष्ठ भद्रं ते गमनायाभिरोचय ॥
तच्छ्रुत्वा वचनं तस्य कृतपूर्वाह्णिकक्रिय ।
तत· प्रागुत्तरां गत्वा रामः सौमित्रिणा सह ।
विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ॥
रामस्तु मुनिशार्दूलमुवाच सहलक्ष्मणः ।
साध्वी यज्ञसमृद्धिर्हि जनकस्य महात्मनः ॥
देशो विधीयतां ब्रह्मन् यत्र वत्स्यामहे वयम् ॥
रामस्य वचनं श्रुत्वा षिश्वामित्रो महामुनिः ।
निवासमकरोद्देशे विविक्ते सलिलान्विते ॥
विश्वामित्रमनुप्राप्तं श्रुत्वा नृपवरस्तदा ।

शतानन्दं पुरस्कृत्य पुरोहितमनिन्दितः ॥
ऋत्विजोऽपि महात्मानस्त्वर्घ्यमादाय सत्वरम् ।
प्रत्युज्जगाम सहसा विनयेन समन्वितः ॥
विश्वामित्राय धर्मेण ददौ धर्मपुरस्कृतम् ।
प्रतिगृह्य तु तां पूजां जनकस्य महात्मन ॥
पप्रच्छ कुशल राज्ञो यज्ञस्य च निरामयम् ।
स तांश्चाथ मुनीन्पृष्ट्वा सोपाध्यायपुरोधसः ॥
यथार्हमृषिभिः सर्वैः समागच्छत्प्रहृष्टवत् ।
अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत ॥
आसने भगवानास्तां सहैभिर्मुनिपुंगवै ।
जनकस्य वचः श्रुत्वा निषसाद महामुनि ॥
पुनस्तं परिपप्रच्छ प्राञ्जलिः प्रयतो नृपः ।
इमौ कुमारौ भद्र ते देवतुल्यपराक्रमौ ॥
गजतुल्यगती वीरौ शार्दूलवृषभोपमौ ।
अश्विनाविव रूपेण समुपस्थितयौवनौ ॥
यदृच्छयेव गां प्राप्तौ देवलोकादिवामरौ ।
कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥
वरायुधधरौ वीरौ कस्य पुत्रौ महामुने ।
तस्य तद्वचनं श्रुत्वा जनकस्य महात्मनः ।
न्यवेदयदमेयात्मा पुत्रौ दशरथस्य तौ ॥
ततः प्रभाते विमले कृतकर्मा नराधिपः ।
विश्वामित्रं महात्मानमाजुहाव सराघवम् ॥

तमर्चयित्वा धर्मात्मा शास्त्रदृष्टेन कर्मणा ।
राघवौ च महात्मानौ तदा वाक्यमुवाच ह ॥
भगवन्स्वागतं तेऽस्तु किं करोमि तवानघ ।
भवानाज्ञापयतु मामाज्ञाप्यो भवता ह्यहम् ॥
एवमुक्तः स धर्मात्मा जनकेन महात्मना ।
प्रत्युवाच मुनिश्रेष्ठो वाक्यं वाक्यविशारदः ॥
पुत्रौ दशरथस्येमौ क्षत्रियौ लोकविश्रुतौ ।
द्रष्टुकामौ धनुःश्रेष्ठं यदेतत्त्वयि तिष्ठति ॥
एतद्दर्शय भद्रं ते कृतकामौ नृपात्मजौ ।
दर्शनादस्य धनुषो यथेष्टं प्रतियास्यतः ॥
एवमुक्तस्तु जनकः प्रत्युवाच महामुनिम् ।
श्रूयतामस्य धनुषो यदर्थमिह तिष्ठति ॥
देवरात इति ख्यातो निमेर्ज्येष्ठो महीपति ।
न्यासोऽयं तस्य भगवान् हस्ते दत्तो महात्मनः ॥
अथ मे कृषतः क्षत्रं लाङ्गलादुत्थिता तत ।
क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ॥
भूतलादुत्थिता सा तु व्यवर्धत ममात्मजा ।
भूतलादुत्थितां तां तु वर्धमानां ममात्मजाम् ॥
वरयामासुरागत्य राजानो मुनिपुंगव ।
तेषां वरयतां कन्यां सर्वेषां पृथिवीक्षिताम् ॥
वीर्यशुल्केति भगवन्न ददामि सुतामहम् ।
ततः सर्वे नृपतयः समेत्य मुनिपुंगव ॥

मिथिलामप्युपागम्य वीर्यं जिज्ञासवस्तदा ।
तेषां जिज्ञासमानानां शैवं धनुरुपाहृतम् ॥
न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि वा ।
तेषां वीर्यवतां वीर्यमल्पं ज्ञात्वा महामुने ॥
प्रत्याख्याता नृपतयस्तन्निबोध तपोधन ।
रोषेण महताविष्टा· पीडयन्मिथिलां पुरीम् ॥
ततः संवत्सरे पूर्णे क्षयं यातानि सर्वशः ।
साधनानि मुनिश्रेष्ठ ततोऽहं भृशदु.खितः ।
ततो देवगणान्सर्वांस्तपसाहं प्रसादयम् ।
ददुश्च परमप्रीताश्चतुरङ्गबलं सुराः ॥
ततो भग्ना नृपतयो हन्यमाना दिशो ययु· ।
अवीर्या वीर्यसंदिग्धा· सामात्याः पापकारिणः ॥
तदेतन्मुनिशार्दूल धनुः परमभास्वरम् ।
रामलक्ष्मणयोश्चापि दर्शयिष्यामि सुव्रत ॥
यद्यस्य धनुषो रामः कुर्यादारोपणं मुने ।
सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ॥
जनकस्य वच· श्रुत्वा विश्वामित्रो महामुनिः ।
धनुर्दर्शय रामाय इति होवाच पार्थिवम् ॥
तत· स राजा जनकः सचिवान्व्यादिदेश ह ।
धनुरानीयतां दिव्यं गन्धमाल्यानुलेपितम् ॥
जनकेन समादिष्टाः सचिवाः प्राविशन्पुरम् ।
तद्धनु· पुरतः कृत्वा निर्जग्मुरमितौजसः ॥

सुरोपमं ते जनकमूचुर्नृपतिमन्त्रिणः ॥
इदं धनुर्वरं राजन्पूजितं सर्वराजभिः ।
मिथिलाधिपराजेन्द्र दर्शनीयं यदीच्छसि ॥
तेषां नृपो वचः श्रुत्वा कृताञ्जलिरभाषत ।
विश्वामित्रं महात्मानं तावुभौ रामलक्ष्मणौ ॥
इदं धनुर्वरं ब्रह्मञ्जनकैरभिपूजितम् ।
राजभिश्च महावीर्यैरशक्तैः पूरितं तदा ॥
नैतत्सुरगणाः सर्वे सासुरा न च राक्षसाः ।
गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः ॥
क्व गतिर्मानुषाणां च धनुषोऽस्य प्रपूरणे ।
आरोपणे समायोगे वेपने तोलने तथा ॥
तदेतद्धनुषां श्रेष्ठमानीतं मुनिपुंगव ।
दर्शयैतन्महाभाग अनयो राजपुत्रयोः ॥
विश्वामित्रः सरामस्तु श्रुत्वा जनकभाषितम् ।
वत्स राम धनुः पश्य इति राघवमब्रवीत् ॥
महर्षेर्वचनाद्रामो यत्र तिष्ठति तद्धनुः ।
मञ्जूषां तामपावृत्य दृष्ट्वा धनुरथाब्रवीत् ॥
इदं धनुर्वरं दिव्यं संस्पृशामीह पाणिना ।
यत्नवांश्च भविष्यामि तोलने पूरणेऽपि वा ॥
बाढमित्यब्रवीद्राजा मुनिश्च समभाषत ।
लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः ॥
पश्यतां नृसहस्राणां बहूनां रघुनन्दनः ।

आरोपयत्स धर्मात्मा सलीलमिव तद्धनुः ॥
आरोपयित्वा मौर्वीं च पूरयामास तद्धनुः ।
तद्बभञ्ज धनुर्मध्ये नरश्रेष्ठो महायशाः ॥
तस्य शब्दो महानासीन्निर्घातसमनिःस्वनः ।
भूमिकम्पश्च सुमहान्पर्वतस्येव दीर्यतः ॥
निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः ।
वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ॥
प्रत्याश्वस्ते जने तस्मिन्राजा विगतसाध्वसः ।
उवाच प्राञ्जलिर्वाक्यं वाक्यज्ञो मुनिपुंगवम् ॥
भगवन्दृष्टवीर्यो मे रामो दशरथात्मजः ।
जनकानां कुले कीर्तिमाहरिष्यति मे सुता ।
सीता भर्तारमासाद्य रामं दशरथात्मजम् ॥
मम सत्या प्रतिज्ञा सा वीर्यसुल्केति कौशिक ।
सीता प्राणैर्बहुमता देया रामाय मे सुता ॥
भवतोऽनुमते ब्रह्मञ्शीघ्रं गच्छन्तु मन्त्रिणः ।
मम कौशिक भद्रं ते अयोध्यां त्वरिता रथैः ॥
राजानं प्रश्रितैर्वाक्यैरानयन्तु पुरं मम ।
प्रदानं वीर्यशुल्कायाः कथयन्तु च सर्वशः ॥
कौशिकस्तु तथेत्याह राजा चाभाष्य मन्त्रिणः ।
अयोध्यां प्रेषयामास धर्मात्मा कृतशासनान् ॥
यथावृत्तं समाख्यातुमानेतुं च नृपं तथा ।
जनकेन समादिष्टा दूतास्ते क्लान्तवाहनाः ॥

त्रिरात्रमुषिता मार्गे तेऽयोध्यां प्राविशन्पुरीम् ।
ते राजवचनाद्गत्वा राजवेश्म प्रवेशिताः ॥
ददृशुर्देवसंकाश वृद्धं दशरथ नृपम् ।
बद्धाञ्जलिपुटा. सर्वे दूता विगतसाध्वसाः ॥
राजानं प्रश्रित वाक्यमब्रुवन्मधुराक्षरम् ।
मैथिलो जनको राजा साग्निहोत्रपुरस्कृत. ॥
मुहुर्मुहुर्मधुरया स्नेहसंरक्तया गिरा ।
पृष्ट्वा कुशलमव्यग्रं वैदेहो मिथिलाधिपः ।
कौशिकानुमते वाक्य भवन्तमिदमब्रवीत् ॥
पूर्वं प्रतिज्ञा विदिता वीर्यशुल्का ममात्मजा ।
राजानश्च कृतामर्षा निर्वीर्या विमुखीकृताः ॥
सेयं मम सुता राजन्विश्वामित्रपुरस्कृतै. ।
यदृच्छयागतै राजन्निर्जिता तव पुत्रकैः ॥
तच्च रत्नं धनुर्दिव्यं मध्ये भग्न महात्मना ।
रामेण हि महाबाहो महत्यां जनसंसदि ॥
अस्मै देया मया सीता वीर्यशुल्का महात्मने ।
प्रतिज्ञां तर्तुमिच्छामि तदनुज्ञातुमर्हसि ॥
सोपाध्यायो महाराज पुरोहितपुरस्कृत ।
शीघ्रमागच्छ भद्रं ते द्रष्टुमर्हसि राघवौ ॥
दूतवाक्यं तु तच्छ्रुत्वा राजा परमहर्षितः ।
वसिष्ठं वामदेवं च मन्त्रिणश्चैवमब्रवीत् ॥
गुप्तः कुशिकपुत्रेण कौशल्यानन्दवर्धनः ।

लक्ष्मणेन सह भ्राता विदेहेषु वसत्यसौ ॥
पृष्टवीर्यस्तु काकुत्स्थो जनकेन महात्मना ।
संप्रदानं सुतायास्तु राघवे कर्तुमिच्छति ॥
यदि वो रोचते वृत्तं जनकस्य महात्मनः ।
पुरीं गच्छामहे शीघ्रं मा भूत्कालस्य पर्ययः ॥
मन्त्रिणो बाढमित्याहुः सह सर्वैर्महर्षिभिः ।
सुप्रीतश्चाब्रवीद्राजा श्वो यात्रेति च मन्त्रिणः ॥
मन्त्रिणस्तु नरेन्द्रस्य रात्रिं परमसत्कृताः ।
ऊषुः प्रमुदिताः सर्वे गुणैः सर्वैः समन्विताः ॥
ततो रात्र्यां व्यतीतायां सोपाध्यायः सबान्धवः ।
राजा दशरथो हृष्टः सुमन्त्रमिदमब्रवीत् ॥
अद्य सर्वे धनाध्यक्षा धनमादाय पुष्कलम् ।
व्रजन्त्वग्रे सुविहिता नानारत्नसमन्विताः ॥
चतुरङ्गबलं चापि शीघ्रं निर्यातु सर्वशः ।
ममाज्ञासमकालं च यानं युग्यमनुत्तमम् ॥
वशिष्ठो वामदेवश्च जाबालिरथ कश्यपः ।
मार्कण्डेयस्तु दीर्घायुरृषिः कात्यायनस्तथा ॥
एते द्विजाः प्रयान्त्वग्रे स्यन्दनं योजयस्व मे ।
यथा कालात्ययो न स्याद्दूता हि त्वरयन्ति माम् ॥
वचनाच्च नरेन्द्रस्य सेना च चतुरङ्गिणी ।
राजानमृषिभिः सार्धं व्रजन्तं पृष्ठतोऽन्वयात् ॥
गत्वा चतुरहं मार्गं विदेहानभ्युपेयिवान् ।

राजा च जनकः श्रीमाञ्श्रुत्वा पूजामकल्पयत् ॥
ततो राजानमासाद्य वृद्धं दशरथं नृपम् ।
मुदितो जनको राजा प्रहर्षं परमं ययौ ॥
ततः प्रभाते जनकः कृतकर्मा महर्षिभिः ।
उवाच वाक्यं वाक्यज्ञः शतानन्दं पुरोहितम् ॥
भ्राता मम महातेजा वीर्यवानतिधार्मिकः ।
कुशध्वज इति ख्यातः पुरीमध्यवसच्छुभाम् ॥
वार्याफलकपर्यन्तां पिबन्निक्षुमती नदीम् ।
सांकाश्यां पुण्यसंकाशां विमानमिव पुष्पकम् ॥
तमहं द्रष्टुमिच्छामि यज्ञगोप्ता स मे ततः ।
प्रीतिं सोऽपि महातेजा इमां भोक्ता मया सह ॥
एवमुक्ते तु वचने शतानन्दस्य संनिधौ ।
आगताः केचिदव्यग्रा जनकस्तान्समादिशत् ॥
शासनात्तु नरेन्द्रस्य प्रययुः शीघ्रवाजिभिः ।
समानेतुं नरव्याघ्रं विष्णुमिन्द्राज्ञया यथा ॥
सांकाश्यां ते समागम्य ददृशुश्च कुशध्वजम् ।
न्यवेदयन्यथावृत्तं जनकस्य च चिन्तितम् ॥
तद्वृत्तं नृपतिः श्रुत्वा दूतश्रेष्ठैर्महाजवैः ।
आज्ञया तु नरेन्द्रस्य आजगाम कुशध्वजः ॥
स ददर्श महात्मानं जनकं धर्मवत्सलम् ।
सोऽभिवाद्य शतानन्दं जनकं चातिधार्मिकम् ॥
राजार्हं परमं दिव्यमासनं सोऽध्यरोहत ।

उपविष्टावुभौ तौ तु भ्रातरावमितद्युती ॥
प्रेषयामासतुर्वीरौ मन्त्रिश्रेष्ठं सुदामनम् ।
गच्छ मन्त्रिपते शीघ्रमिक्ष्वाकुममितप्रभम् ॥
आत्मजैः सह दुर्धर्षमानयस्व समन्त्रिणम् ।
औपकार्यां स गत्वा तु रघूणां कुलवर्धनम् ॥
ददर्श शिरसा चैनमभिवाद्येदमब्रवीत् ।
अयोध्याधिपते वीर वैदेहो मिथिलाधिपः ॥
स त्वां द्रष्टुं व्यवसितः सोपाध्यायपुरोहितम् ।
मन्त्रिश्रेष्ठवचः श्रुत्वा राजा सर्षिगणस्तथा ॥
सबन्धुरगमत्तत्र जनको यत्र वर्तते ।
राजा च मन्त्रिसहितः सोपाध्यायः सबान्धवः ॥
वाक्यं वाक्यविदां श्रेष्ठो वैदेहमिदमब्रवीत् ।
विदितं ते महाराज इक्ष्वाकुकुलदैवतम् ॥
वक्ता सर्वेषु कृत्येषु वसिष्ठो भगवानृषिः ।
विश्वामित्राभ्यनुज्ञातः सह सर्वैर्महर्षिभिः ॥
एष वक्ष्यति धर्मात्मा वसिष्ठो मे यथाक्रमम् ।
तूष्णीभूते दशरथे वसिष्ठो भगवानृषिः ॥
उवाच वाक्यं वाक्यज्ञो वैदेहं सपुरोधसम् ।
अम्बरीषस्य पुत्रोऽभून्नहुषश्च महीपतिः ।
नहुषस्य ययातिस्तु नाभागस्तु ययातिजः ॥
नाभागस्य बभूवाज अजाद्दशरथोऽभवत् ।
अस्माद्दशरथाज्जातौ भ्रातरौ रामलक्ष्मणौ ॥

रामलक्ष्मणयोरर्थे त्वत्सुते वरये नृप ।
सदृशाभ्यां नरश्रेष्ठ सदृशे दातुमर्हसि ॥
एवं ब्रुवाणं जनकः प्रत्युवाच कृताञ्जलि ।
कनीयानेष मे भ्राता अहं ज्येष्ठो महामुने ।
ददामि परमप्रीतो वध्वौ ते मुनिपुंगव ॥
सीतां रामाय भद्र ते ऊर्मिलां लक्ष्मणाय वै ।
वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम् ॥
द्वितीयामूर्मिलां चैव त्रिर्वदामि न संशयः ।
ददामि परमप्रीतो वध्वौ ते मुनिपुंगव ॥
रामलक्ष्मणयो राजन्गोदानं कारयस्व ह ।
पितृकार्यं च भद्रं ते ततो वैवाहिकं कुरु ॥
मघा ह्यद्य महाबाहो तृतीयदिवसे प्रभो ।
फल्गुन्यामुत्तरे राजंस्तस्मिन्वैवाहिकं कुरु ॥
रामलक्ष्मणयोरर्थे दानं कार्यं सुखोदयम् ।
तमुक्तवन्तं वैदेहं विश्वामित्रो महामुनिः ॥
उवाच वचनं वीरं वसिष्ठसहितो नृपम् ।
अचिन्त्यान्यप्रमेयाणि कुलानि नरपुंगव ॥
इक्ष्वाकूणां विदेहानां नैषां तुल्योऽस्ति कश्चन ।
सदृशो धर्मसंबन्धः सदृशो रूपसंपदा ॥
रामलक्ष्मणयो राजन्सीता चोर्मिलया सह ।
वक्तव्यं च नरश्रेष्ठ श्रूयतां वचनं मम ॥
भ्राता यवीयान्धर्मज्ञ एष राजा कुशध्वजः ।

अस्य धर्मात्मनो राजन्रूपेणाप्रतिमं भुवि ॥
सुताद्वयं नरश्रेष्ठ पत्न्यर्थं वरयामहे ।
भरतस्य कुमारस्य शत्रुघ्नस्य च धीमतः ॥
वरये ते सुते राजस्तयोरर्थे महात्मनोः ।
पुत्रा दशरथस्येमे रूपयौवनशालिनः ॥
विश्वामित्रवचः श्रुत्वा वसिष्ठस्य मते तदा ॥
जनकः प्राञ्जलिर्वाक्यमुवाच मुनिपुंगवौ ।
एवं भवतु भद्रं वः कुशध्वजसुते इमे ॥
पत्न्यौ भजेतां सहितौ शत्रुघ्नभरतावुभौ ।
एकाह्ना राजपुत्रीणां चतसृणां महामुने ॥
पाणीन्गृह्णन्तु चत्वारो राजपुत्रा महाबलाः ।
तद्वाक्यं जनकेनोक्तं श्रुत्वा दशरथस्तदा ।
प्रवेशयामास सुतान् सर्वानृषिगणानपि ॥
ततो राजा विदेहानां वसिष्ठमिदमब्रवीत् ॥
कारयस्व ऋषे सर्वामृषिभिः सह धार्मिक ।
रामस्य लोकरामस्य क्रियां वैवाहिकीं प्रभो ॥
तथेत्युक्त्वा तु जनकं वसिष्ठो भगवानृषिः ।
विश्वामित्रं पुरस्कृत्य शतानन्दं च धार्मिकम् ॥
प्रपामध्ये तु विधिवद्वेदिं कृत्वा महातपाः ।
अलंचकार तां वेदिं गन्धपुष्पैः समन्ततः ॥
सुवर्णपालिकाभिश्च चित्रकुम्भैश्च साङ्कुरैः ।
अग्निमाधाय तं वेद्यां विधिमन्त्रपुरस्कृतम् ॥

जुहावाग्नौ महातेजा वसिष्ठो मुनिपुंगवः ।
ततः सीतां समानीय सर्वाभरणभूषिताम् ॥
समक्षमग्नेः संस्थाप्य राघवाभिमुखे तदा ।
अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ॥
इयं सीता मम सुता सहधर्मचरी तव ।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ॥
पतिव्रता महाभागा छायेवानुगता सदा ।
इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूत जलं तदा ॥
साधु साध्विति देवानामृषीणां वदतां तदा ।
देवदुन्दुभिनिर्घोष पुष्पवर्षो महानभूत् ॥
एवं दत्त्वा सुतां सीतां मन्त्रोदकपुरस्कृताम् ।
अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुत. ॥
लक्ष्मणागच्छ भद्र ते ऊर्मिलामुद्यतां मया ।
प्रतीच्छ पाणिं गृह्णीष्व मा भूत्कालस्य पर्ययः ॥
तमेवमुक्त्वा जनको भरतं चाभ्यभाषत ।
गृहाण पाणि माण्डव्या. पाणिना रघुनन्दन ॥
शत्रुघ्नं चापि धर्मात्मा अब्रवीन्मिथिलेश्वर ।
श्रुतिकीर्तेर्महाबाहो पाणिं गृह्णीष्व पाणिना ॥
सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः ।
पत्नीभिः सन्तु काकुत्स्था मा भूत्कालस्य पर्ययः ॥
जनकस्य वचः श्रुत्वा पाणीन्पाणिभिरस्पृशन् ।
चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिता. ॥

अग्निं प्रदक्षिणं कृत्वा वेदिं राजानमेव च ।
ऋषीश्चापि महात्मानः सहभार्या रघूद्वहाः ॥
यथोक्तेन ततश्चक्रुर्विवाहं विधिपूर्वकम् ।
पुष्पवृष्टिर्महत्यासीदन्तरिक्षात्सुभास्वरा ॥
दिव्यदुन्दुभिनिर्घोषैर्गीतवादित्रनिःस्वनैः ।
ननृतुश्चाप्सरःसङ्घा गन्धर्वाश्च जगुः कलम् ॥
विवाहे रघुमुख्यानां तदद्भुतमदृश्यत ।
ईदृशे वर्तमाने तु तूर्योद्घुष्टनिनादिते ॥
त्रिरग्निं ते परिक्रम्य ऊहुर्भार्या महौजसः ।
अथोपकार्यं जग्मुस्ते सभार्या रघुनन्दनाः ॥
राजाप्यनुययौ पश्यन्सर्षिसङ्घः सबान्धवः ।
अथ रात्र्यां व्यतीतायां विश्वामित्रो महामुनिः ॥
आपृष्ट्वा तौ च राजानौ जगामोत्तरपर्वतम् ।
विश्वामित्रे गते राजा वैदेहं मिथिलाधिपम् ॥
आपृष्ट्वैव जगामाशु राजा दशरथः पुरीम् ।
अथ राजा विदेहानां ददौ कन्याधनं बहु ॥
दत्त्वा बहुविधं राजा समनुज्ञाप्य पार्थिवम् ।
प्रविवेश स्वनिलयं मिथिलां मिथिलेश्वरः ॥
राजाप्ययोध्याधिपतिः सह पुत्रैर्महात्मभिः ।
ऋषीन्सर्वान्पुरस्कृत्य जगाम सबलान्वितः ॥
पुत्रैरनुगतः श्रीमाञ्श्रीमद्भिश्च महायशाः ।
प्रविवेश गृहं राजा हिमवत्सदृशं प्रियम् ॥

ननन्द स्वजनै राजा गृहे कामैः सुपूजितः ।
कौसल्या च सुमित्रा च कैकेयी च सुमध्यमा ॥
वधूप्रतिग्रहे युक्ता याश्चान्या राजयोषितः ।
ततः सीतां महाभागामूर्मिलां च यशस्विनीम् ॥
कुशध्वजसुते चोभे जगृहुर्नृपयोषितः ।
मङ्गलालापनैर्होमैः शोभिताः क्षौमवाससः ॥
देवतायतनान्याशु सर्वास्ताः प्रत्यपूजयन् ।
अभिवाद्याभिवाद्यांश्च सर्वा राजसुतास्तदा ॥
रेमिरे मुदिताः सर्वा भर्तृभिर्मुदिता रहः ।
कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः ॥
शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः ।
कस्यचित्त्वथ कालस्य राजा दशरथः सुतम् ॥
भरतं कैकयीपुत्रमब्रवीद्रघुनन्दनः ।
अयं केकयराजस्य पुत्रो वसति पुत्रक ॥
त्वां नेतुमागतो वीरो युधाजिन्मातुलस्तव ।
श्रुत्वा दशरथस्यैतद्भरतः कैकयीसुतः ॥
गमनायाभिचक्राम शत्रुघ्नसहितस्तदा ।
आपृच्छ्य पितरं शूरो रामं चाक्लिष्टकारिणम् ॥
मातॄश्चापि नरश्रेष्ठः शत्रुघ्नसहितो ययौ ।
युधाजित्प्राप्य भरतं सशत्रुघ्नं प्रहर्षितः ॥
गच्छता मातुलकुलं भरतेन तदानघः ।
शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥

स तत्र न्यवसद्भ्रात्रा सह सत्कारसत्कृत ।
मातुलेनाश्वपतिना पुत्रस्नेहेन लालित· ॥
तत्रापि निवसन्तौ तौ तर्प्यमाणौ च कामतः ।
भ्रातरौ स्मरतां वीरौ वृद्धं दशरथ नृपम् ॥
राजापि तौ महातेजा· सस्मार प्रोषितौ सुतौ ।
उभौ भरतशत्रुघ्नौ महेन्द्रवरुणोपमौ ॥
सर्व एव तु तस्येष्टाश्चत्वार· पुरुषर्षभा. ।
स्वशरीराद्विनिर्वृत्ताश्चत्वार इव बाहवः ॥
तेषामपि महातेजा रामो रतिकर· पितुः ।
स्वयंभूरिव भूतानां बभूव गुणवत्तरः ॥
स च नित्यं प्रशान्तात्मा मृदुपूर्व च भाषते ।
उच्यमानोऽपि परुषं नोत्तर प्रतिपद्यते ॥
न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥
बुद्धिमान्मधुराभाषी पूर्वभाषी प्रियंवद· ।
वीर्यवान्न च वीर्येण महता स्वेन विस्मितः ॥
न चानृतकथो विद्वान्वृद्धानां प्रतिपूजकः ।
अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरज्यते ॥
इत्येवं विविधैस्तैस्तैरन्यपार्थिवदुर्लभैः ।
शिष्टैरपरिमेयैश्च लोके लोकोत्तमैर्गुणैः ॥
तं समीक्ष्य तदा राजा युक्तं समुदितैर्गुणैः ।
निश्चित्य सचिवैः सार्धं यौवराज्यममन्यत ॥
इति प्रत्यर्चितान्राजा ब्राह्मणानिदमब्रवीत् ।

वसिष्ठ वामदेव च तेषामेवोपश्रृण्वताम् ।।
चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः ।
यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम् ।।
ततः पौरजनः सर्वः श्रुत्वा रामाभिषेचनम् ।
प्रभातां रजनीं दृष्ट्वा चक्रे शोभयितुं पुरीम् ।।
सिताभ्रशिखराभेषु देवतायतनेषु च ।
चतुष्पथेषु रथ्यासु चैत्येष्वट्टालकेषु च ।।
नानापण्यसमृद्धेषु वणिजामापणेषु च ।
कुटुम्बिनां समृद्धेषु श्रीमत्सु भवनेषु च ।।
सभासु चैव सर्वासु वृक्षेष्वालक्षितेषु च ।
ध्वजाः समुच्छ्रिताः साधु पताकाश्चाभवस्तथा ।।
नटनर्तकसङ्घानां गायकानां च गायताम् ।
मनःकर्णसुखा वाचः शुश्राव जनता ततः ।।
रामाभिषेकयुक्ताश्च कथाश्चक्रुर्मिथो जनाः ।
रामाभिषेके संप्राप्ते चत्वरेषु गृहेषु च ।।
बाला अपि क्रीडमाना गृहद्वारेषु सङ्घशः ।
रामाभिषवसंयुक्ताश्चक्रुरेव कथा मिथः ।।
कृतपुष्पोपहारश्च धूपगन्धादिवासितः ।
राजमार्गः कृतः श्रीमान्पौरैः रामाभिषेचने ।।
प्रकाशीकरणार्थं च निशागमनशङ्कया ।
दीपवृक्षांस्तथा चक्रुरनुरथ्यासु सर्वशः ।।
ज्ञातिदासी यतो जाता कैकेय्या तु सहोषिता ।

प्रासादं चन्द्रसंकाशमारुरोह यदृच्छया ॥
सिक्तराजपथां कृत्स्नां प्रकीर्णकमलोत्पलाम् ।
अयोध्या मन्थरा तस्मात्प्रासादादन्ववैक्षत ॥
हृष्टप्रमुदितैः पौरैरुच्छ्रितध्वजमालिनीम् ।
अयोध्या मन्थरा दृष्ट्वा पर विस्मयमागता ॥
सा हर्षोत्फुल्लनयनां पाण्डुरक्षौमवासिनीम् ।
अविदूरे स्थितां दृष्ट्वा धात्री पप्रच्छ मन्थरा ॥
उत्तमेनाभिसंयुक्ता हर्षेणार्थपरा सती ।
राममाता धनं किं नु जनेभ्यः संप्रयच्छति ॥
अतिमात्रं प्रहर्षः कि जनस्यास्य च शसने ।
कारयिष्यति किं वापि संप्रहृष्टो महीपति ॥
विदीर्यमाणा हर्षेण धात्री तु परया मुदा ।
आचचक्षेऽथ कुब्जायै भूयसी राघवे श्रियम् ॥
श्वः पुष्येण जितक्रोधं यौवराज्येन चानघम् ।
राजा दशरथो राममभिषेक्ता हि राघवम् ॥
धात्र्यास्तु वचनं श्रुत्वा कुब्जा क्षिप्रममर्षिता ।
कैलासशिखराकारात्प्रासादादवरोहत ॥
सा दह्यमाना क्रोधेन मन्थरा पापदर्शिनी ।
शयानामेव कैकेयीमिदं वचनमब्रवीत् ॥
उत्तिष्ठ मूढे किं शेषे भयं त्वामभिवर्तते ।
उपप्लुतमघौघेन नात्मानमवबुद्ध्यसे ॥
अनिष्टे सुभगाकारे सौभाग्येन विकत्थसे ।

चलं हि तव सौभाग्यं नद्याः स्रोत इवोष्णगे ॥
एवमुक्ता तु कैकेयी रुष्टया परुषं वचः ।
कुब्जया पापदर्शिन्या विषादमगमत्परम् ॥
कैकेयी त्वब्रवीत्कुब्जां कच्चित्क्षेमं न मन्थरे ।
विषण्णवदनां हि त्वां लक्षये भृशदुःखिताम् ॥
मन्थरा तु वचः श्रुत्वा कैकेय्या मधुराक्षरम् ।
उवाच क्रोधसंयुक्ता वाक्यं वाक्यविशारदा ॥
सा विषण्णतरा भूत्वा कुब्जा तस्यां हितैषिणी ।
विषादयन्ती प्रोवाच भेदयन्ती च राघवम् ॥
अक्षयं सुमहद्देवि प्रवृत्तं त्वद्विनाशनम् ।
रामं दशरथो राजा यौवराज्येऽभिषेक्ष्यति ॥
मन्थराया वचः श्रुत्वा शयनात्सा शुभानना ।
उत्तस्थौ हर्षसंपूर्णा चन्द्रलेखेव शारदी ॥
अतीव सा तु संतुष्टा कैकेयी विस्मयान्विता ।
दिव्यमाभरणं तस्यै कुब्जायै प्रददौ शुभम् ॥
दत्त्वा त्वाभरणं तस्यै कुब्जायै प्रमदोत्तमा ।
कैकेयी मन्थरां दृष्ट्वा पुनरेवाब्रवीदिदम् ॥
इदं तु मन्थरे मह्यमाख्यातं परमं प्रियम् ।
एतन्मे प्रियमाख्यातं किं वा भूयः करोमि ते ॥
रामे वा भरते वाहं विशेषं नोपलक्षये ।
तस्मात्तुष्टास्मि यद्राजा रामं राज्येऽभिषेक्ष्यति ॥
न मे परं किंचिदितो वरं पुनः प्रियं प्रियार्हे सुवचं वचोऽमृतम् ।

तथाह्यवोचस्त्वमतः प्रियोत्तरं वर परं ते प्रददामि

मन्थरा त्वभ्यसूय्यैनामुत्सृज्याभरणं हि तत् ।
उवाचेद ततो वाक्य' कोपदुःखसमन्विता ॥
हर्षं किमर्थमस्थाने कृतवत्यसि बालिशे ।
शोकसागरमध्यस्थं नात्मानमवबुंद्ध्यसे ॥
मनसा प्रसहामि त्वां देवि दु.खार्दिता सती ।
यच्छोचितव्ये हृष्टासि प्राप्य त्वं व्यसनं महत् ॥
शोचामि दुर्मतित्वं ते का हि प्राज्ञा प्रहर्षयेत् ।
अरे. सपत्नीपुत्रस्य वृद्धि मृत्योरिवागताम् ॥
भरतादेव रामस्य राज्यसाधारणाद्भयम् ।
तद्विचिन्त्य विषण्णास्मि भय' भीताद्धि जायते ॥
प्रत्यासन्नक्रमेणापि भरतस्यैव भामिनि ।
तां दृष्ट्वा परमप्रीतां ब्रुवन्तीं मन्थरां तत' ।
रामस्यैव गुणान्देवी कैकेयी प्रशशस ह ॥
धर्मज्ञो गुणवान्दान्त' कृतज्ञ' सत्यवाञ्छुचिः ।
रामो राजसुतो ज्येष्ठो यौवराज्यमतोऽर्हति ॥
भ्रातृन्भृत्यांश्च दीर्घायुः पितृवत्पालयिष्यति ।
संतप्यसे कथं कुब्जे श्रुत्वा रामाभिषेचनम् ॥
कैकेय्या वचनं श्रुत्वा मन्थरा भृशदुःखिता ।
दीर्घमुष्णं विनिःश्वस्य कैकेयीमिदमब्रवीत् ॥
अनर्थदर्शिनी मौर्ख्यान्नात्मानमवबुद्ध्यसे ।
शोकव्यसनविस्तीर्णे मज्जन्ती दुःखसागरे ॥

भविता राघवो राजा राघवस्य च यः सुतः ।
राजवंशात्तु भरतः कैकेयि परिहास्यते ॥
ध्रुवं तु भरतं रामः प्राप्य राज्यमकण्टकम् ।
देशान्तरं नाययिता लोकान्तरमथापि वा ॥
गोप्ता हि रामं सौमित्रिर्लक्ष्मणं चापि राघवः ।
अश्विनोरिव सौभ्रात्रं तयोर्लोकेषु विश्रुतम् ॥
तस्मान्न लक्ष्मणे रामः पापं किंचित्करिष्यति ।
रामस्तु भरते पापं कुर्यादेव न संशय. ।
स ते सुखोचितो बालो रामस्य सहजो रिपुः ॥
समृद्धार्थस्य नष्टार्थो जीविष्यति कथं वशे ।
दर्पान्निराकृता पूर्वं त्वया सौभाग्यवत्तया ।
राममाता सपत्नी ते कथं वैरं न यापयेत् ॥
यदाहि रामः पृथिवीमवाप्स्यते ध्रुवं प्रणष्टो भरतो भविष्यति ।
अतोहि संचिन्तय राज्यमात्मजे परस्य चैवास्य विवासकारणम् ॥
एवमुक्ता तु कैकेयी क्रोधेन ज्वलितानना ।
दीर्घमुष्णं विनिःश्वस्य मन्थरामिदमब्रवीत् ॥
अद्य राममितः क्षिप्रं वनं प्रस्थापयाम्यहम् ।
यौवराज्येन भरतं क्षिप्रमद्याभिषेचये ॥
इदं त्विदानीं संपश्य केनोपायेन साधये ।
भरतः प्राप्नुयाद्राज्यं न तु रामः कथंचन ॥
एवमुक्ता तु सा देव्या मन्थरा पापदर्शिनी ।
रामार्थमुपहिंसन्ती कैकेयीमिदमब्रवीत् ॥

पुरा देवासुरे युद्धे सह राजर्षिभिः पतिः ।
आगच्छत्त्वामुपादाय देवराजस्य साह्यकृत् ॥
तत्रापि विक्षतः शस्त्रैः पतिस्ते रक्षितस्त्वया ॥
तुष्टेन तेन दत्तौ ते द्वौ वरौ शुभदर्शने ।
स त्वयोक्तः पतिर्देवि यदिच्छेयं तदा वरम् ॥
गृह्णीयां तु तदा भर्तस्तथेत्युक्तं महात्मना ।
अनभिज्ञा ह्यहं देवि त्वयैव कथितं पुरा ॥
कथैषा तव तु स्नेहान्मनसा धार्यते मया ।
रामाभिषेकसंभारान्निगृह्य विनिवर्तय ॥
तौ च याचस्व भर्तारं भरतस्याभिषेचनम् ।
प्रव्राजनं च रामस्य वर्षाणि च चतुर्दश ॥
चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम् ।
प्रजाभावगतस्नेहः स्थिरः पुत्रो भविष्यति ॥
तथा प्रोत्साहिता देवी गत्वा मन्थरया सह ।
क्रोधागारं विशालाक्षी सौभाग्यमदगर्विता ॥
तदाहेमोपमा तत्र कुब्जावाक्यवशंगता ।
संविश्य भूमौ कैकेयी मन्थरामिदमब्रवीत् ॥
इह वा मां मृतां कुब्जे नृपायावेदयिष्यसि ।
वनं तु राघवे प्राप्ते भरतः प्राप्स्यते क्षितिम् ॥
सुवर्णेन न मे ह्यर्थो न रत्नैर्न च भोजनैः ।
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥
आज्ञाप्य तु महाराजो राघवस्याभिषेचनम् ॥

उपस्थानमनुज्ञाप्य प्रविवेश निवेशनम् ।
अद्य रामाभिषेको वै प्रसिद्ध इति जज्ञिवान् ॥
प्रियार्हां प्रियमाख्यातुं विवेशान्तःपुरं वशी ।
स कैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः ॥
ततो गृहगतो राजा कैकेयीं पर्यपृच्छत ॥
प्रतिहारी त्वथोवाच संत्रस्ता तु कृताञ्जलिः ॥
देव देवी भृशं क्रुद्धा क्रोधागारमभिद्रुता ।
प्रतीहार्या वचः श्रुत्वा राजा परमदुर्मनाः ॥
तत्र तां पतितां भूमौ शयानामतथोचिताम् ॥
अपापः पापसंकल्पां ददर्श धरणीतले ।
परिमृज्य च पाणिभ्यामभिसंत्रस्तचेतनः ।
कामी कमलपत्राक्षीमुवाच वनितामिदम् ॥
न तेऽहमभिजानामि क्रोधमात्मनि संश्रितम् ।
देवि केनाभियुक्तासि केन वासि विमानता ॥
तथोक्ता सा समाश्वस्ता वक्तुकामा तदप्रियम् ।
परिपीडयितुं भूयो भर्तारमुपचक्रमे ॥
नास्मि विप्रकृता देव केनचिन्नावमानिता ।
अभिप्रायस्तु मे कश्चित्तमिच्छामि त्वया कृतम् ॥
प्रतिज्ञां प्रतिजानीष्व यदि त्वं कर्तुमिच्छसि ।
अथ ते व्याहरिष्यामि यथाभिप्रार्थितं मया ॥
तामुवाच महाराजः कैकेयीमीषदुत्स्मयः ।
यं मुहूर्तमपश्यंस्तु न जीवे तमहं ध्रुवम् ।

तेन रामेण कैकेयि शपे ते वचनक्रियाम् ॥
करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ॥
सा तदर्थमना देवी तमभिप्रायमागतम् ।
निर्माध्यस्थ्याच्च हर्षाच्च बभाषे दुर्वचं वचः ॥
स्मर राजन्पुरा वृत्तं तस्मिन्देवासुरे रणे ।
तत्र त्वां च्यावयच्छत्रुस्तव जीवितमन्तरा ॥
तत्र चापि मया देव यत्त्वं समभिरक्षितः ।
जाग्रत्या यतमानायास्ततो मे प्रददौ वरौ ॥
तौ दत्तौ च वरौ देव निक्षेपौ मृगयाम्यहम् ।
तवैव पृथिवीपाल सकाशे रघुनन्दन ॥
तत्प्रतिश्रुत्य धर्मेण न चेद्दास्यसि मे वरम् ।
अद्यैव हि प्रहास्यामि जीवितं त्वद्विमानिता ॥
तौ तावदहमद्यैव वक्ष्यामि शृणु मे वचः ।
अभिषेकसमारम्भो राघवस्योपकल्पितः ॥
अनेनैवाभिषेकेण भरतो मेऽभिषिच्यताम् ।
यो द्वितीयो वरो देव दत्तः प्रीतेन मे त्वया ॥
तदा देवासुरे युद्धे तस्य कालोऽयमागतः ।
नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः ॥
चीराजिनधरो धीरो रामो भवतु तापसः ।
भरतो भजतामद्य यौवराज्यमकण्टकम् ॥
एष मे परमः कामो दत्तमेव वरं वृणे ।
अद्य चैव हि पश्येयं प्रयान्तं राघवं वने ॥

ततः श्रुत्वा महाराजः कैकेय्या दारुणं वचः ।
चिन्तामभिसमापेदे मुहूर्तं प्रतताप च ॥
किं नु मेऽयं दिवास्वप्नश्चित्तमोहोऽपि वा मम ।
अनुभूतोपसर्गो वा मनसो वाप्युपद्रवः ॥
कैकेयीमब्रवीत्क्रुद्धो निर्दहन्निव तेजसा ।
नृशंसे दुष्टचारित्रे कुलस्यास्य विनाशिनी ॥
किं कृतं तव रामेण पापे पापं मयापि वा ।
सदा ते जननीतुल्यां वृत्तिं वहति राघव ॥
तस्यैवं त्वमनर्थाय किंनिमित्तमिहोद्यता ।
त्वं मयात्मविनाशाय भवनं स्वं निवेशिता ॥
पारं शोकार्णवस्याशु प्रलपन्तं पुनः पुनः ।
प्रत्युवाचाथ कैकेयी रौद्रा रौद्रतर वचः ॥
यदि दत्त्वा वरौ राजन्पुनः प्रत्यनुतप्यसे ।
धार्मिकत्वं कथं वीर पृथिव्यां कथयिष्यसि ॥
भरतेनात्मना चाहं शपे ते मनुजाधिप ।
यथा नान्येन तुष्येयमृते रामविवासनात् ॥
एतावदुक्त्वा वचनं कैकेयी विरराम ह ।
विलपन्तं च राजानं न प्रतिव्याजहार सा ॥
श्रुत्वा तु राजा कैकेय्या वाक्यं परमशोभनम् ।
रामस्य च वने वासमैश्वर्यं भरतस्य च ॥
नाभ्यभाषत कैकेयीं मुहूर्तं व्याकुलेन्द्रियः ।
प्रैक्षतानिमिषो देवीं प्रियामप्रियवादिनीम् ॥

स देव्या व्यवसायं च घोरं च शपथं कृतम् ।
ध्यात्वा रामेऽतिनिःश्वस्य च्छिन्नस्तरुरिवापतत् ॥
ततः प्रभातां रजनीमुदिते च दिवाकरे ।
पुण्ये नक्षत्रयोगे च मुहूर्ते च समागते ॥
वसिष्ठो गुणसंपन्नः शिष्यैः परिवृतस्तथा ।
उपगृह्याशु संभारान्प्रविवेश पुरोत्तमम् ॥
पौरजानपदाकीर्णं ब्राह्मणैरुपशोभितम् ।
यष्टिमद्भिः सुसंपूर्णं सदश्वैः परमार्चितैः ॥
तदन्तःपुरमासाद्य व्यतिचक्राम तं जनम् ।
वसिष्ठः परमप्रीतः परमर्षिभिरावृतः ॥
स त्वपश्यद्विनिष्क्रान्तं सुमन्त्रं नाम सारथिम् ।
द्वारे मनुजसिंहस्य सचिवं प्रियदर्शनम् ॥
तमुवाच महातेजाः सूतपुत्रं विशारदम् ।
वसिष्ठः क्षिप्रमाचक्ष्व नृपतेर्मामिहागतम् ॥
त्वरयस्व महाराजं यथा समुदितेऽहनि ।
पुष्ये नक्षत्रयोगे च रामो राज्यमवाप्नुयात् ॥
इति तस्य वचः श्रुत्वा सूतपुत्रो महाबलः ।
स्तुवन्नृपतिशार्दूलं प्रविवेश निवेशनम् ॥
तं तु पूर्वोदितं वृद्धं द्वारस्था राजसंमताः ।
न शेकुरभिसंरोद्धुं राज्ञः प्रियचिकीर्षवः ॥
स समीपस्थितो राज्ञस्तामवस्थामजज्ञिवान् ।
वाग्भिः परमतुष्टाभिरभिष्टोतुं प्रचक्रमे ॥

उत्तिष्ठ सुमहाराज कृतकौतुकमङ्गलः ।
विराजमानो वपुषा मेरोरिव दिवाकरः ॥
उदतिष्ठत रामस्य समग्रमभिषेचनम् ।
पौरजानपदाश्चापि नैगमश्च कृताञ्जलिः ॥
अयं वसिष्ठो भगवान्ब्राह्मणैः सह तिष्ठति ।
क्षिप्रमाज्ञाप्यतां राजन्राघवस्याभिषेचनम् ॥
यदा वक्तुं स्वय दैन्यान्न शशाक महीपतिः ।
तदा सुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह ॥
सुमन्त्र राजा रजनीं रामहर्षसमुत्सुकः ।
प्रजागरपरिश्रान्तो निद्रावशमुपागतः ॥
तद्गच्छ त्वरितं सूत राजपुत्रं यशस्विनम् ।
राममानय भद्रं ते नात्र कार्या विचारणा ॥
अश्रुत्वा राजवचनं कथ गच्छामि भामिनि ।
तच्छ्रुत्वा मन्त्रिणो वाक्यं राजा मन्त्रिणमब्रवीत् ॥
सुमन्त्र रामं द्रक्ष्यामि शीघ्रमानय सुन्दरम् ।
स मन्यमानः कल्याणं हृदयेन ननन्द च ॥
निर्जगाम च स प्रीत्या त्वरितो राजशासनात् ।
स तदन्तःपुरद्वारं समतीत्य जनाकुलम् ।
प्रविविक्तां तत. कक्ष्यामाससाद पुराणवित् ॥
प्रासकार्मुकबिभ्रद्भिर्युवभिर्मृष्टकुण्डलैः ।
अप्रमादिभिरेकाग्रैः स्वानुरक्तैरधिष्ठिताम् ॥
अत्र काषायिणो वृद्धान्वेत्रपाणीन्स्वलंकृतान् ।

ददर्श विष्ठितान्द्वारि स्त्र्यध्यक्षान्सुसमाहितान् ॥
ते समीक्ष्य समायान्त रामप्रियचिकीर्षव ।
सहसोत्पतिताः सर्वे ह्यासनेभ्यः ससंभ्रमाः ॥
तानुवाच विनीतात्मा सूतपुत्रः प्रदक्षिणः ।
क्षिप्रमाख्यात रामाय सुमन्त्रो द्वारि तिष्ठति ॥
ते राममुपसंगम्य भर्तुः प्रियचिकीर्षवः ।
सहभार्याय रामाय क्षिप्रमेवाचचक्षिरे ॥
प्रतिवेदितमाज्ञाय सूतमभ्यन्तरं पितुः ।
तत्रैवानाययामास राघवः प्रियकाम्यया ॥
तं वैश्रवणसंकाशमुपविष्टं स्वलंकृतम् ।
ददर्श सूतः पर्यङ्के सौवर्णे सोत्तरच्छदे ॥
स्थितया पार्श्वतश्चापि बालव्यजनहस्तया ।
उपेतं सीतया भूयश्चित्रया शशिनं यथा ॥
तं तपन्तमिवादित्यमुपपन्नं स्वतेजसा ।
ववन्दे वरदं बन्दी विनयज्ञो विनीतवत् ॥
प्राञ्जलिः सुमुखं दृष्ट्वा विहारशयनासने ।
राजपुत्रमुवाचेदं सुमन्त्रो राजसत्कृतः ॥
कौसल्यासुप्रजा राम पिता त्वां द्रष्टुमिच्छति ।
महिष्यापि हि कैकेय्या गम्यतां तत्र मा चिरम् ॥
एवमुक्तस्तु संहृष्टो नरसिंहो महाद्युतिः ।
ततः संमानयामास सीतामिदमुवाच ह ॥
देवि देवश्च देवी च समागम्य मदन्तरे ।

मन्त्रयेते ध्रुवं किंचिदभिषेचनसंहितम् ॥
लक्षयित्वा ह्यभिप्रायं प्रियकामा सुदक्षिणा ।
संचोदयति राजानं मदर्थमसितेक्षणा ॥
सा प्रहृष्टा महाराजं हितकामानुवर्तिनी ।
जननी चार्थकामां मे केकयाधिपतेः सुता ॥
दिष्ट्या खलु महाराजो महिष्या प्रियया सह ।
सुमन्त्रं प्राहिणोद्दूतमर्थकामकरं मम ॥
यादृशी परिषत्तत्र तादृशो दूत आगतः ।
ध्रुवमद्यैव मां राजा यौवराज्येऽभिषेक्ष्यति ॥
हन्त शीघ्रमितो गत्वा द्रक्ष्यामि च महीपतिम् ।
सह त्वं परिवारेण सुखमास्व रमस्व च ॥
अथ सीता मनुज्ञाप्य कृतकौतुक मङ्गल ।
निश्चक्राम सुमन्त्रेण सहरामो निवेशनात् ।
स ददर्शासने रामो विषण्णं पितरं शुभे ।
कैकेय्या सहितं दीनं मुखेन परिशुष्यता ॥
स पितुश्चरणौ पूर्वमभिवाद्य विनीतवत् ।
ततो ववन्दे चरणौ कैकेय्याः सुसमाहितः ॥
रामेत्युक्त्वा तु वचनं बाष्पपर्याकुलेक्षणः ।
शशाक नृपतिर्दीनो नेक्षितुं नाभिभाषितुम् ॥
तदपूर्वं नरपतेर्दृष्ट्वा रूपं भयावहम् ।
रामोऽपि भयमापन्नः पदा स्पृष्ट्वेव पन्नगम् ॥
इन्द्रियैरप्रहृष्टैस्तं शोकसंतापकर्शितम् ।

निःश्वसन्त महाराज व्यथिताकुलचेतसम् ॥
ऊर्मिमालिनमक्षोभ्य क्षुभ्यन्तमिव सागरम् ।
उपप्लुतमिवादित्यमुक्तानृतमृषिं यथा ॥
अचिन्त्यकल्प नृपतेस्तं शोकमुपधारयन् ।
बभूव संरब्धतरः समुद्र इव पर्वणि ॥
चिन्तयामास चतुरो राम. पितृहिते रतः ।
किंस्विदद्यैव नृपतिर्न मां प्रत्यभिनन्दति ॥
अन्यदा मां पिता दृष्ट्वा कुपितोऽपि प्रसीदति ।
तस्य मामद्य संप्रेक्ष्य किमायासः प्रवर्तते ॥
स दीन इव शोकार्तो विषण्णवदनद्युतिः ।
कैकेयीमभिवाद्यैव रामो वचनमब्रवीत् ॥
कच्चिन्मया नापराद्धमज्ञानाद्येन मे पिता ।
कुपितस्तन्ममाचक्ष्व त्वमेवैनं प्रसादय ॥
एवमुक्ता तु कैकेयी राघवेण महात्मना ।
उवाचेदं सुनिर्लज्जा धृष्टमात्महितं वचः ॥
न राजा कुपितो राम व्यसनं नास्य किंचन ।
किंचिन्मनोगत त्वस्य त्वद्भयान्नानुभाषते ॥
एष मह्यं वरं दत्त्वा पुरा मामभिपूज्य च ।
स पश्चात्तप्यते राजा यथान्यः प्राकृतस्तथा ॥
धर्ममूलमिदं राम विदितं च सतामपि ।
तत्सत्यं न त्यजेद्राजा कुपितस्त्वत्कृते यथा ॥
यदि तद्वक्ष्यते राजा शुभं वा यदि वाशुभम् ।

करिष्यसि ततः सर्वमाख्यास्यामि पुनस्त्वहम् ॥
यदि त्वभिहितं राज्ञा त्वयि तन्न विपत्स्यते ।
ततोऽहमभिधास्यामि नह्येष त्वयि वक्ष्यति ॥
एतत्तु वचनं श्रुत्वा कैकेय्या समुदाहृतम् ।
उवाच व्यथितो रामस्तां देवीं नृपसंनिधौ ॥
अहो धिङ् नार्हसे देवि वक्तुं मामीदृशं वचः ।
अहं हि वचनाद्राज्ञः पतेयमपि पावके ॥
भक्षयेयं विषं तीक्ष्णं पतेयमपि चार्णवे ।
नियुक्तो गुरुणा पित्रा नृपेण च हितेन च ॥
तद्ब्रूहि वचनं देवि राज्ञो यदभिकाङ्क्षितम् ।
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ॥
तमार्जवसमायुक्तमनार्या सत्यवादिनम् ।
उवाच रामं कैकेयी वचनं भृशदारुणम् ॥
पुरा देवासुरे युद्धे पित्रा ते मम राघव ।
रक्षितेन वरौ दत्तौ सशल्येन महारणे ॥
तत्र मे याचितो राजा भरतस्याभिषेचनम् ।
गमनं दण्डकारण्ये तव चाद्यैव राघव ॥
यदि सत्यप्रतिज्ञं त्वं पितरं कर्तुमिच्छसि ।
आत्मानं च नरश्रेष्ठ मम वाक्यमिदं शृणु ॥
संनिदेशे पितुस्तिष्ठ यथानेन प्रतिश्रुतम् ।
त्वयारण्यं प्रवेष्टव्यं नव वर्षाणि पञ्च च ॥
भरतश्चाभिषिच्येत यदेतदभिषेचनम् ।

त्वदर्थे विहितं राज्ञा तेन सर्वेण राघव ॥
सप्त सप्त च वर्षाणि दण्डकारण्यमाश्रित. ।
अभिषेकमिद त्यक्त्वा जटाचीरधरो भव ॥
भरतः कोसलपतेः प्रशास्तु वसुधामिमाम् ।
एतेन त्वां नरेन्द्रोऽयं कारुण्येन समाप्लुतः ।
शोकैः संक्लिष्टवदनो न शक्नोति निरीक्षितुम् ॥
एतत्कुरु नरेन्द्रस्य वचनं रघुनन्दन ।
सत्येन महता राम तारयस्व नरेश्वरम् ॥
इतीव तस्यां परुषं वदन्त्यां न चैव रामः प्रविवेश शोकम् ।
प्रविव्यथे चापि महानुभावो राजा च पुत्रव्यसनाभितप्तः ॥
तदप्रियममित्रघ्नो वचनं मरणोपमम् ।
श्रुत्वा न विव्यथे रामः कैकेयीं चेदमब्रवीत् ॥
एवमस्तु गमिष्यामि वनं वस्तुमहं त्वितः ।
जटाचीरधरो राज्ञः प्रतिज्ञामनुपालयन् ॥
इदं तु ज्ञातुमिच्छामि किमर्थं मां महीपतिः ।
नाभिनन्दति दुर्धर्षो यथापूर्वमरिंदमः ॥
अलीकं मानसं त्वेकं हृदयं दहते मम ।
स्वयं यन्नाह मां राजा भरतस्याभिषेचनम् ॥
अहं हि सीतां राज्यं च प्राणानिष्टान्धनानि च ।
हृष्टो भ्रात्रे स्वयं दद्यां भरताय प्रचोदितः ॥
गच्छन्तु चैवानयितुं दूताः शीघ्रजवैर्हयैः ।
भरतं मातुलकुलादद्यैव नृपशासनात् ॥

दण्डकारण्यमेषोऽह गच्छाम्येव हि सत्वरः ।
अविचार्य पितुर्वाक्यं समावस्तुं चतुर्दश ॥
सा हृष्टा तस्य तद्वाक्य श्रुत्वा रामस्य कैकयी ।
प्रस्थानं श्रद्दधाना सा त्वरयामास राघवम् ॥
एवं भवतु यास्यन्ति दूता शीघ्रजवैर्हयै ।
भरतं मातुलकुलादिहावर्तयितुं नराः ॥
तव त्वहं क्षमं मन्ये नोत्सुकस्य विलम्बनम् ।
राम तस्मादितः शीघ्र वनं त्व गन्तुमर्हसि ॥
व्रीडान्वितः स्वयं यच्च नृपस्त्वां नाभिभाषते ।
नैतत्किंचिन्नरश्रेष्ठ मन्युरेषोऽपनीयताम् ॥
यावत्त्वं न वनं यातः पुरादस्मादतित्वरन् ।
पिता तावन्न ते राम स्नास्यते भोक्ष्यतेऽपि वा ॥
धिक्कष्टमिति निःश्वस्य राजा शोकपरिप्लुतः ।
मूर्च्छितो न्यपतत्तस्मिन्पर्यङ्के हेमभूषिते ॥
रामोऽप्युत्थाप्य राजानं कैकेय्याभिप्रचोदितः ।
कशयेव हतो वाजी वनं गन्तुं कृतत्वरः ॥
तदप्रियमनार्याया वचनं दारुणोदयम् ।
श्रुत्वा गतव्यथो रामः कैकेयी वाक्यमब्रवीत् ॥
यावन्मातरमापृच्छे सीता चानुनयाम्यहम् ।
ततोऽद्यैव गमिष्यामि दण्डकानां महद्वनम् ॥
भरतः पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा ।
तथा भवत्या कर्तव्य स हि धर्मः सनातनः ॥

वन्दित्वा चरणौ राज्ञो विसंज्ञस्य पितुस्तदा ।
कैकेय्याश्चाप्यनार्याया निष्पपात महाद्युति· ॥
स रामः पितर कृत्वा कैकेयी च प्रदक्षिणम् ।
निष्क्रम्यान्तःपुरात्तस्मात्स्वं ददर्श सुहृज्जनम् ॥
तं बाष्पपरिपूर्णाक्षः पृष्ठतोऽनुजगाम ह ।
लक्ष्मणः परमक्रुद्धः सुमित्रानन्दवर्धनः ॥
आभिषेचनिकं भाण्ड कृत्वा रामः प्रदक्षिणम् ।
शनैर्जगाम सापेक्षो दृष्टिं तत्राविचालयन् ॥
न चास्य महती लक्ष्मी राज्यनाशोऽपकर्षति ।
लोककान्तस्य कान्तत्वाच्छीतरश्मेरिव क्षय· ॥
वाचा मधुरया रामः सर्वं संमानयञ्जनम् ।
मातुः समीपं धर्मात्मा प्रविवेश महायशा. ॥
तं गुणैः समतां प्राप्तो भ्राता विपुलविक्रमः ।
सौमित्रिरनुवव्राज धारयन्दुःखमात्मजम् ॥
प्रविश्य वेश्मातिभृशं मुदायुतं समीक्ष्य तां चार्थविपत्तिमागताम् ।
न चैव रामोऽत्र जगाम विक्रियां सुहृज्जनस्यात्मविपत्तिशङ्कया ॥
कौसल्यापि तदा देवी रात्रिं स्थित्वा समाहिता ।
प्रभाते चाकरोत्पूजां विष्णोः पुत्रहितैषिणी ॥
अग्निं जुहोति स्म तदा मन्त्रवत्कृतमङ्गला ॥
सा चिरस्यात्मजं दृष्ट्वा मातृनन्दनमागतम् ।
अभिचक्राम संहृष्टा किशोरं वडवा यथा ॥
स मातरमुपक्रान्तामुपसंगृह्य राघवः ।

परिष्वक्तश्च बाहुभ्यामवघ्रातश्च मूर्द्धनि ॥
तमुवाच दुराधर्षं राघवं सुतमात्मनः ।
कौसल्यापुत्रवात्सल्यादिदं प्रियहितं वचः ॥
अद्यैव त्वां स धर्म्मात्मा यौवराज्येऽभिषेक्ष्यति ।
मातरं राघवः किञ्चित् प्रसार्य्याञ्जलिमब्रवीत् ॥
देवि नूनं न जानीषे महद्भयमुपस्थितम् ।
भरताय महाराजो यौवराज्यं प्रयच्छति ॥
मां पुनर्दण्डकारण्यं विवासयति तापसम् ।
स षट् चाष्टौ च वर्षाणि वत्स्यामि विजने वने ॥
सा निकृत्तेव सालस्य यष्टिः परशुना वने ।
पपात सहसा देवी देवतेव दिवश्च्युता ॥
तामदुःखोचितां दृष्ट्वा पतितां कदलीमिव ।
रामस्तूत्थापयामास मातरं गतचेतसम् ॥
उपावृत्योत्थितां दीनां वडवामिव वाहिताम् ।
पांसुगुण्ठितसर्वाङ्गीं विममर्श च पाणिना ॥
सा राघवमुपासीनमसुखार्ता सुखोचिता ।
उवाच पुरुषव्याघ्रमुपशृण्वति लक्ष्मणे ॥
यदि पुत्र न जायेथा मम शोकाय राघव ।
न स्म दुःखमतो भूयः पश्येयमहमप्रजाः ॥
ममैव नूनं मरणं न विद्यते न चावकाशोऽस्ति यमक्षये मम ।
यदन्तकोऽद्यैव न मां जिहीर्षति प्रसह्य सिंहो रुदतीं मृगीमिव ॥
स्थिरं हि नूनं हृदयं ममायसं न भिद्यते यद्भुवि नो विदीर्यते ।

अनेन दु:खेन च देहमर्पितं ध्रुवं ह्यकाले मरणं न विद्यते ॥
इदं तु दु:ख यदनर्थकानि मे व्रतानि दानानि च संयमाश्च हि।
तपश्च तप्तं यदपत्यकाम्यया सुनिष्फलं बीजमिवोप्तमूषरे ॥
यदि ह्यकाले मरणं यदृच्छया लभेत कश्चिद्गुरुदु:खकर्शितः ।
गताहमद्यैव परेतसंसदं विना त्वया धेनुरिवात्मजेन वै ॥
अथापि किं जीवितमद्य मे वृथा त्वया विना चन्द्रनिभाननप्रभ ।
अनुव्रजिष्यामि वनं त्वयैव गौः सुदुर्बला वत्समिवाभिकाङ्क्षया ॥
भृशमसुखममर्षिता यदा बहु विललाप समीक्ष्य राघवम् ।
व्यसनमुपनिशाम्यता महत्सुतमिव बद्धमवेक्ष्य किंनरी ॥

विलपन्तीं तथा दीनां कौसल्यां जननी ततः ।
उवाच रामो धर्मात्मा वचनं धर्मसंहितम् ॥
नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम ।
प्रसादये त्वां शिरसा गन्तुमिच्छाम्यह वनम् ॥
अनुमन्यस्व मां देवि गमिष्यन्तमितो वनम् ।
शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ॥
तीर्णप्रतिज्ञश्च वनात्पुनरेष्याम्यहं पुरीम् ।
ययातिरिव राजर्षिः पुरा हित्वा पुनर्दिवम् ॥
शोकः संधार्यतां मातर्हृदये साधु मा शुचः ।
वनवासादिहैष्यामि पुनः कृत्वा पितुर्वचः ॥
त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया ।
पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ॥
अम्ब संभृत्य संभारान्दु:खं हृदि निगृह्य च ।

वनवासकृता बुद्धिर्मम धर्म्यानुवर्त्यताम् ॥
एवमुक्ता तु रामेण बाष्पपर्याकुलेक्षणा ॥
कौसल्या पुत्रशोकार्ता रामं वचनमब्रवीत् ।
गमने सुकृतां बुद्धिं न ते शक्नोमि पुत्रक ॥
विनिवर्तयितुं वीर नूनं कालो दुरत्यय ।
गच्छ पुत्र त्वमेकाग्रो भद्रं तेऽस्तु सदा विभो ॥
पुनस्त्वयि निवृत्ते तु भविष्यामि गतक्लमा ।
कृतान्तस्य गतिः पुत्र दुर्विभाव्या सदा भुवि ।
यत्त्वां संचोदयति मे वच आविद्धय राघव ॥
गच्छेदानी महाबाहो क्षेमेण पुनरागतः ।
नन्दयिष्यसि मां पुत्र साम्ना श्लक्ष्णेन चारुणा ॥
अपीदानी स काल. स्याद्वनात्प्रत्यागत पुनः ।
यत्त्वां पुत्रक पश्येयं जटावल्कलधारिणम् ॥

तथाहि रामं वनवासनिश्चितं ददर्श देवी परमेण चेतसा ।
उवाच रामं शुभलक्षणं वचो बभूव च स्वस्त्ययनाभिकाङ्क्षिणी ॥

सा विनीय तमायासमुपस्पृश्य जलं शुचि ।
चकार माता रामस्य मङ्गलानि मनस्विनी ॥
न शक्यते वारयितुं गच्छेदानी रघूत्तम ।
शीघ्रं च विनिवर्तस्व वर्तस्व च सतां क्रमे ॥
यं पालयसि धर्मं त्वं प्रीत्या च नियमेन च ।
स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु ॥
येभ्यः प्रणमसे पुत्र देवेष्वायतनेषु च ।

ते च त्वामभिरक्षन्तु वने सह महर्षिभिः ॥
यानि दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता ।
तानि त्वामभिरक्षन्तु गुणैः समुदितं सदा ॥
पितृशुश्रूषया पुत्र मातृशुश्रूषया तथा ।
सत्येन च महाबाहो चिर जीवाभिरक्षितः ॥
समित्कुशपवित्राणि वेद्यश्चायतनानि च ।
स्थण्डिलानि च विप्राणां शैला वृक्षाः क्षुपा ह्रदाः ॥
पतङ्गाः पन्नगाः सिंहास्त्वा रक्षन्तु नरोत्तम ॥
स्वस्ति साध्याश्च विश्वे च मरुतश्च महर्षिभिः ।
स्वस्ति धाता विधाता च स्वस्ति पूषा भगोऽर्यमा ॥
लोकपालाश्च ते सर्वे वासवप्रमुखास्तथा ।
ऋतवः षट् च ते सर्वे मासाः संवत्सराः क्षपाः ॥
दिनानि च मुहूर्ताश्च स्वस्ति कुर्व्वन्तु ते सदा ।
महावनेऽपि चरतो मुनिवेषस्य धीमतः ।
तथा देवाश्च दैत्याश्च भवन्तु सुखदाः सदा ॥
राक्षसानां पिशाचानां रौद्राणां क्रूरकर्मणाम् ।
क्रव्यादानां च सर्वेषां मा भूत्पुत्रक ते भयम् ॥
प्लवगा वृश्चिका दंशा मशकाश्चैव कानने ।
सरीसृपाश्च कीटाश्च माभूवन्गहने तव ॥
महाद्विपाश्च सिंहाश्च व्याघ्रा ऋक्षाश्च दंष्ट्रिणः ।
महिषाः शृङ्गिणो रौद्रा न ते द्रुह्यन्तु पुत्रक ॥

नृमांसभोजना रौद्रा ये चान्ये सर्वजातिया: । ❀
मा च त्वां हिंसिषुः पुत्र मया संपूजितास्त्विह ॥
इति पुत्रस्य शेषाश्च कृत्वा शिरसि भामिनी ।
आनम्य मूर्ध्नि चाघ्राय परिष्वज्य यशस्विनी ।
अवदत्पुत्रमिष्टार्थो गच्छ राम यथासुखम् ॥
अरोगं सर्वसिद्धार्थमयोध्यां पुनरागतम् ।
पश्यामि त्वां सुखं वत्स संधित राजवर्त्मसु ॥
तया हि देव्या च कृतप्रदक्षिणो निपीड्य मातुश्चरणौ पुनः पुनः ।
जगाम सीतानिलयं महायशा स राघवः प्रज्वलितस्तया श्रिया ॥
अभिवाद्य तु कौसल्यां रामः संप्रस्थितो वनम् ।
कृतस्वस्त्ययनो मात्रा धर्मिष्ठे वर्त्मनि स्थितः ॥
विराजयन्राजसुतो राजमार्गं नरैर्वृतम् ।
हृदयान्याममन्थेव जनस्य गुणवत्तया ॥
वैदेही चापि तत्सर्वं न शुश्राव तपस्विनी ।
तदेव हृदि तस्याश्च यौवराज्याभिषेचनम् ॥
देवकार्यं स्म सा कृत्वा कृतज्ञा हृष्टचेतना ।
अभिज्ञा राजधर्माणां राजपुत्री प्रतीक्षती ॥
प्रविवेशाथ रामस्तु स्ववेश्म सुविभूषितम् ।
प्रहृष्टजनसंपूर्णं ह्रिया किंचिदवाङ्मुखः ॥
अथ सीता समुत्पत्य वेपमाना च तं पतिम् ।
अपश्यच्छोकसंतप्तं चिन्ताव्याकुलितेन्द्रियम् ॥

* सर्वजातयः इति पाठान्तरम् ।

तां दृष्ट्वा स हि धर्मात्मा न शशाक मनोगतम् ।
तं शोकं राघवः सोढुं ततो विवृततां गतः ॥
विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षणम् ।
आह दुःखाभिसंतप्ता किमिदानीमिद प्रभो ॥
अद्य बार्हस्पतः श्रीमान्युक्तः पुष्येण राघव ।
प्रोच्यते ब्राह्मणैः प्राज्ञैः केन त्वमसि दुर्मनाः ॥
अभिषेको यदा सज्जः किमिदानीमिदं तव ।
अपूर्वो मुखवर्णश्च न प्रहर्षश्च लक्ष्यते ॥
इतीव विलपन्ती तां प्रोवाच रघुनन्दनः ।
सीते तत्रभवांस्तातः प्रव्राजयति मां वनम् ॥
कुले महति संभूते धर्मज्ञे धर्मचारिणि ।
शृणु जानकि येनेदं क्रमेणाद्यागतं मम ॥
राज्ञा सत्यप्रतिज्ञेन पित्रा दशरथेन वै ।
कैकेय्यै मम मात्रे तु पुरा दत्तौ महावरौ ॥
तयाद्य मम सज्जेऽस्मिन्नभिषेके नृपोद्यते ।
प्रचोदितः स समयो धर्मेण प्रतिनिर्जितः ॥
चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया ।
पित्रा मे भरतश्चापि यौवराज्ये नियोजितः ॥
याते च मयि कल्याणि वनं मुनिनिषेवितम् ।
व्रतोपवासपरया भवितव्यं त्वयानघे ॥
कल्यमुत्थाय देवानां कृत्वा पूजां यथाविधि ।
वन्दितव्यो दशरथः पिता मम जनेश्वरः ॥

माता च मम कौसल्या वृद्धा संतापकर्शिता ।
धर्ममेवाग्रतः कृत्वा त्वत्तः संमानमर्हति ॥
एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी ।
प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत् ॥
किमिदं भाषसे राम वाक्यं लघुतया ध्रुवम् ।
त्वया यदपहास्यं मे श्रुत्वा नरवरोत्तम ॥
यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव ।
अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् ॥
अनन्यभावामनुरक्तचेतसं त्वया वियुक्तां मरणाय निश्चिताम् ।
नयस्व मां साधु कुरुष्व याचनां नातो मया ते गुरुता भविष्यति ॥
तां परिष्वज्य बाहुभ्यां विसंज्ञामिव दुःखिताम् ।
उवाच वचनं रामः परिविश्वासयंस्तदा ॥
न देवि तव दुःखेन स्वर्गमप्यभिरोचये ।
नहि मेऽस्ति भयं किंचित्स्वयंभोरिव सर्वतः ॥
मम सन्ना मतिः सीते नेतुं त्वां दण्डकावनम् ।
वसिष्यामीति सा त्वं मामनुयातुं सुनिश्चिता ॥
सा हि दिष्टानवद्याङ्गि वनाय मदिरेक्षणे ।
अनुगच्छस्व मां भीरु सहधर्मचरी भव ॥
एवं श्रुत्वा स संवाद लक्ष्मणः पूर्वमागतः ।
बाष्पपर्याकुलमुखः शोकं सोढुमशक्नुवन् ॥
स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः ।
सीतामुवाचातियशां राघवं च महाव्रतम् ॥

यदि गन्तुं कृता बुद्धिर्वनं मृगगजायुतम् ।
अहं त्वानुगमिष्यामि वनमग्रे धनुर्धरः ॥
रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाच तम् ।
व्रजापृच्छस्व सौमित्रे सर्वमेव सुहृज्जनम् ॥
स सुहृज्जनमामन्त्र्य वनवासाय निश्चितः ।
इक्ष्वाकुगुरुमागम्य जग्राहायुधमुत्तमम् ॥
ततः सुमन्त्रः काकुत्स्थं प्राञ्जलिर्वाक्यमब्रवीत् ।
विनीतो विनयज्ञश्च मातलिर्वासवं यथा ॥
रथमारोह भद्रं ते राजपुत्र महायशः ।
क्षिप्रं त्वां प्रापयिष्यामि यत्र मां राम वक्ष्यसे ॥
चतुर्दश हि वर्षाणि वस्तव्यानि वने त्वया ।
तान्युपक्रमितव्यानि यानि देव्या प्रचोदितः ॥
तं रथं सूर्यसंकाशं सीता हृष्टेन चेतसा ।
आरुरोहा वरारोहा कृत्वालंकारमात्मनः ॥
अथो ज्वलनसंकाशं चामीकरविभूषितम् ।
तमारुरुहतुस्तूर्णं भ्रातरौ रामलक्ष्मणौ ॥
सीतातृतीयानारूढान्दृष्ट्वा रथमचोदयत् ।
सुमन्त्रः संमतानश्वान्वायुवेगसमाञ्जवे ॥
तत्समाकुलसंभ्रान्तं मत्तसंकुपितद्विपम् ।
हयसिञ्जितनिर्घोषं पुरमासीन्महास्वनम् ॥
ततः सबालवृद्धा सा पुरी परमपीडिता ।
राममेवाभिदुद्राव घर्मार्तः सलिलं यथा ॥

पार्श्वतः पृष्ठतश्चापि लम्बमानास्तदुन्मुखाः ।
बाष्पपूर्णमुखाः सर्वे तमूचुर्भृशनिःस्वनाः ॥
अन्वीक्षमाणो रामस्तु विषण्णं भ्रान्तचेतसम् ।
राजानं मातरं चैव ददर्शानुगतौ पथि ॥
स बद्ध इव पाशेन किशोरो मातरं यथा ।
धर्मपाशेन संयुक्तः प्रकाशं नाभ्युदैक्षत ॥
पदातिनौ च यानार्हावदुःखार्हौ सुखोचितौ ।
दृष्ट्वा संचोदयामास शीघ्रं याहीति सारथिम् ॥
विशालान्कोसलान्रम्यान्यात्वा लक्ष्मणपूर्वजः ।
अयोध्यामुन्मुखो धीमान्प्राञ्जलिर्वाक्यमब्रवीत् ॥
आपृच्छे त्वां पुरिश्रेष्ठे काकुत्स्थपरिपालिते ।
दैवतानि च यानि त्वां पालयन्त्यावसन्ति च ॥
निवृत्तवनवासस्त्वामनृणो जगतीपतेः ।
पुनर्द्रक्ष्यामि मात्रा च पित्रा च सह संगतः ॥
ततो रुचिरताम्राक्षो भुजमुद्यम्य दक्षिणम् ।
अश्रुपूर्णमुखो दीनोऽब्रवीज्जानपदं जनम् ॥
अनुक्रोशो दया चैव यथार्हं मयि वः कृत ।
चिरं दुःखस्य पापी यो गम्यतामर्थसिद्धये ॥
तेऽभिवाद्य महात्मानं कृत्वा चापि प्रदक्षिणम् ।
विलपन्तो नरा घोरं व्यतिष्ठंश्च क्वचित्क्वचित् ॥
तथा विलपतां तेषामतृप्तानां च राघवः ।
अचक्षुर्विषयं प्रायाद्यथार्कः क्षणदामुखे ॥

ततो धान्यधनोपेतान्दानशीलजनाञ्शिवान् ।
रथेन पुरुषव्याघ्रः कोसलानत्यवर्तत ।
मध्येन मुदितं स्फीत रम्योद्यानसमाकुलम् ।
राज्य भोज्यं नरेन्द्राणां ययौ धृतिमतां वरः ॥
तत्र राजा गुहो नाम रामस्यात्मसमः सखा ।
निषादजात्यो बलवान्स्थपतिश्चेति विश्रुतः ॥
स श्रुत्वा पुरुषव्याघ्रं राम विषयमागतम् ।
वृद्धैः परिवृतोऽमात्यैर्ज्ञातिभिश्चाप्युपागतः ॥
ततो निषादाधिपतिं दृष्ट्वा दूरादुपस्थितम् ।
सह सौमित्रिणा रामः समागच्छद्गुहेन सः ॥
तमार्तः संपरिष्वज्य गुहो राघवमब्रवीत् ।
यथायोध्या तथेद ते राम कि करवाणि ते ॥
गुहमेवं ब्रुवाणं तु राघवः प्रत्युवाच ह ।
अर्चिताश्चैव हृष्टाश्च भवता सर्वदा वयम् ॥
पद्भ्यामभिगमाच्चैव स्नेहसंदर्शनेन च ।
भुजाभ्यां साधुवृत्ताभ्यां पीडयन्वाक्यमब्रवीत् ॥
दिष्ट्या त्वां गुह पश्यामि ह्यरोगं सह बान्धवैः ।
अपि ते कुशल राष्ट्रे मित्रेषु च वनेषु च ॥
ततश्चीरोत्तरासङ्गः संध्यामन्वास्य पश्चिमाम् ।
जलमेवाददे भोज्यं लक्ष्मणेनाहृतंस्वयम् ॥
तस्य भूमौ शयानस्य पादौ प्रक्षाल्य लक्ष्मणः ।
सभार्यस्य ततोऽभ्येत्य तस्थौ वृक्षमुपाश्रितः ॥

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः ।
उवाच रामः सौमित्रिं लक्ष्मणं शुभलक्षणम् ॥
भास्करोदयकालोऽसौ गता भगवती निशा ।
असौ सुकृष्णो विहगः कोकिलस्तात कूजति ॥
बर्हिणानां च निर्घोषः श्रूयते नदतां वने ।
तराम जाह्नवीं सौम्य शीघ्रगां सागरंगमाम् ॥
विज्ञाय रामस्य वचः सौमित्रिर्मित्रनन्दनः ।
गुहमामन्त्र्य सूतं च सोऽतिष्ठद्भ्रातुरग्रतः ॥
स तु रामस्य वचनं निशम्य प्रतिगृह्य च ।
स्थपतिस्तूर्णमाहूय सचिवानिदमब्रवीत् ॥
अस्य वाहनसंयुक्तां कर्णग्राहवतीं शुभाम् ।
सुप्रतारां दृढां तीर्थे शीघ्रं नावमुपाहर ॥
तं निशम्य गुहादेशं गुहामात्यो गतो महान् ।
उपोह्य रुचिरां नावं गुहाय प्रत्यवेदयत् ॥
ततः स प्राञ्जलिर्भूत्वा गुहो राघवमब्रवीत् ।
उपस्थितेयं नौर्देव भूयः किं करवाणि ते ॥
तवामरसुतप्रख्य तर्तुं सागरगामिनीम् ।
नौरियं पुरुषव्याघ्र शीघ्रमारोह सुव्रत ॥
अथोवाच महातेजा रामो गुहमिदं वचः ।
कृतकामोऽस्मि भवता शीघ्रमारोप्यतामिति ॥
ततः कलापान्संनह्य खड्गौ बद्ध्वा च धन्विनौ ।
जग्मतुर्येन तां गङ्गां सीतया सह राघवौ ॥

राममेवं तु धर्मज्ञमुपागत्य विनीतवत् ।
किमहं करवाणीति सूतः प्राञ्जलिरब्रवीत् ॥
ततोऽब्रवीद्दाशरथिः सुमन्त्रं स्पृशन्करेणोत्तमदक्षिणेन
सुमन्त्र शीघ्रं पुनरेव याहि राज्ञः सकाशे भव चाप्रमत्तः ॥
अनुज्ञाय सुमन्त्रं च सबलं चैव तं गुहम् ।
आस्थाय नावं रामस्तु चोदयामास नाविकान् ॥
ततस्तैश्चालिता नौका कर्णधारसमाहिता ।
मध्यं तु समनुप्राप्य भागीरथ्यास्त्वनिन्दिता ।
वैदेही प्राञ्जलिर्भूत्वा तां नदीमिदमब्रवीत् ॥
पुत्रो दशरथस्यायं महाराजस्य धीमत. ।
निदेशं पालयत्वेनं गङ्गे त्वदभिरक्षितः ॥
चतुर्दश हि वर्षाणि समग्राण्युष्य कानने ।
भ्रात्रा सह मया चैव पुनः प्रत्यागमिष्यति ॥
ततस्त्वां देवि सुभगे क्षेमेण पुनरागता ।
यक्ष्ये प्रमुदिता गङ्गे सर्वकामसमृद्धिनी ॥
तथा संभाषमाणा सा सीता गङ्गामनिन्दिता ।
दक्षिणा दक्षिणं तीरं क्षिप्रमेवाभ्युपागमत् ॥
तीरं तु समनुप्राप्य नावं हित्वा नरर्षभः ।
प्रातिष्ठत सह भ्रात्रा वैदेह्या च परंतपः ॥
कथयित्वा तु दुःखार्तः सुमन्त्रेण चिरं सह ।
रामे दक्षिणकूलस्थे जगाम स्वगृहं गुहः ॥
अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान् ।

अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः ॥
ततः सायाह्नसमये द्वितीयेऽहनि सारथिः ।
अयोध्यां समनुप्राप्य निरानन्दां ददर्श ह ॥
सोऽवतीर्य रथाच्छीघ्रं राजवेश्म प्रविश्य च ।
कक्ष्याः सप्ताभिचक्राम महाजनसमाकुलाः ॥
स प्रविश्याष्टमीं कक्ष्यां राजानं दीनमातुरम् ।
पुत्रशोकपरिद्यूनमपश्यत्पाण्डुरे गृहे ॥
अभिगम्य तमासीनं राजानमभिवाद्य च ।
सुमन्त्रो रामवचनं यथोक्तं प्रत्यवेदयत् ॥
स तूष्णीमेव तच्छ्रुत्वा राजा विद्रुतमानसः ।
मूर्च्छितो न्यपतद्भूमौ रामशोकाभिपीडितः ॥
अथ याः कोशलेन्द्रस्य शयनं प्रत्यनन्तराः ।
ताः स्त्रियस्तु समागम्य भर्तारं प्रत्यबोधयन् ॥
अथाप्युचित्तवृत्तास्ता विनयेन नयेन च ।
न ह्यस्य शयनं स्पृष्ट्वा किंचिदप्युपलेभिरे ॥
ताः स्त्रियः स्वप्नशीलज्ञाश्चेष्टां संचलनादिषु ।
ता वेपथुपरीताश्च राज्ञः प्राणेषु शङ्किताः ॥
प्रतिस्रोतस्तृणाग्राणां सदृशं संचकाशिरे ।
अथ संदेहमानानां स्त्रीणां दृष्ट्वा च पार्थिवम् ॥
यत्तदाशङ्कितं पापं तदा जज्ञे विनिश्चयः ।
कौसल्या च सुमित्रा च पुत्रशोकपराजिते ।
निष्प्रभाषा विवर्णा च सन्ना शोकेन संयता ।

ते च दृष्ट्वा तदा सुप्ते उभे देव्यौ च तं नृपम् ।
सुप्तमेवोद्गतप्राणमन्तःपुरमदृश्यत ॥
ततः प्रचुक्रुशुर्दीनाः सस्वरं ता वराङ्गनाः ।
करेणव इवारण्ये स्थानप्रच्युतयूथपाः ॥
तासामाक्रन्दशब्देन सहसोद्गतचेतने ।
कौसल्या च सुमित्रा च त्यक्तनिद्रे बभूवतुः ॥
कौसल्या च सुमित्रा च दृष्ट्वा स्पृष्ट्वा च पार्थिवम् ।
हा भर्तेति परिक्रुश्य पेततुर्धरणीतले ॥
आक्रन्दिता निरानन्दा सास्रकण्ठजनाविला ।
अयोध्यायामवतता सा व्यतीयाय शर्वरी ॥
व्यतीतायां तु शर्वर्यामादित्यस्योदये ततः ।
समेत्य राजकर्तारः सभामीयुर्द्विजातयः ॥
मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च कश्यपः ।
कात्यायनो गौतमश्च जाबालिश्च महायशाः ॥
एते द्विजाः सहामात्यैः पृथग्वाचमुदीरयन् ।
वशिष्ठमेवाभिमुखाः श्रेष्ठं राजपुरोहितम् ॥
अतीता शर्वरी दुःखं या नो वर्षशतोपमा ।
अस्मिन्पञ्चत्वमापन्ने पुत्रशोकेन पार्थिवे ॥
स्वर्गस्थश्च महाराजो रामश्चारण्यमाश्रितः ।
लक्ष्मणश्चापि तेजस्वी रामेणैव गतः सह ॥
उभौ भरतशत्रुघ्नौ केकयेषु परंतपौ ।
पुरे राजगृहे रम्ये मातामहनिवेशने ॥

इक्ष्वाकूणामिहाद्यैव कश्चिद्राजा विधीयताम् ।
अराजकं हि नो राष्ट्रं विनाशं समवाप्नुयात् ॥
तेषां तद्वचनं श्रुत्वा वशिष्ठः प्रत्युवाच ह ।
मित्रामात्यजनान्सर्वान्ब्राह्मणांस्तानिदं वचः ॥
यदसौ मातुलकुले दत्तराज्यः पर सुखी ।
भरतो वसति भ्रात्रा शत्रुघ्नेन मुदान्वितः ॥
तच्छीघ्रं जवना दूता गच्छन्तु त्वरितं हयैः ।
आनेतुं भ्रातरौ वीरौ किं समीक्षामहे वयम् ॥
ततः प्रास्थानिकं कृत्वा कार्यशेषमनन्तरम् ।
वसिष्ठेनाभ्यनुज्ञाता दूताः संत्वरितं ययुः ॥
यामेव रात्रिं ते दूताः प्रविशन्ति स्म तां पुरीम् ।
भरतेनापि तां रात्रि स्वप्नोदृष्टोऽयमप्रियः ॥
भरते ब्रुवति स्वप्नं दूतास्ते क्लान्तवाहनाः ।
प्रवृश्यासह्यपरिखं रम्यं राजगृहं पुरम् ॥
समागम्य च राज्ञा ते राजपुत्रेण चार्चिताः ।
राज्ञः पादौ गृहीत्वा च तमूचुर्भरतं वचः ॥
पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ।
त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥
एवमुक्त्वा तु तान्दूतान्भरतः पार्थिवात्मजः ।
प्रतिगृह्य च तत्सर्वं स्वनुरक्तः सुहृज्जने ।
दूतानुवाच भरतः कामैः संप्रतिपूज्य तान् ।
कच्चित्स कुशली राजा पिता दशरथो मम ।

कच्चिदारोग्यता रामे लक्ष्मणे च म त्मनि ।
दूतैः संचोदितो वाक्यं मातामहमुवाच ह ॥
राजन्पितुर्गमिष्यामि सकाशं दूतचोदितः ।
पुनरप्यहमेष्यामि यदा मे त्वं स्मरिष्यसि ॥
भरतेनैवमुक्तस्तु नृपो मातामहस्तदा ।
तमुवाच शुभं वाक्यं शिरस्याघ्राय राघवम् ॥
गच्छतातानुजाने त्वां कैकेयी सुप्रजास्त्वया ।
मातरं कुशलं ब्रूयाः पितरं च परंतप ॥
स मातामहमापृच्छ्य मातुलं च युधाजितम् ।
रथमारुह्य भरतः शत्रुघ्नसहितो ययौ ॥
अयोध्यां मनुना राज्ञा निर्मितां स ददर्श ह ।
तां पुरीं पुरुषव्याघ्रः सप्तरात्रोषितः पथि ॥
अयोध्यामग्रतो दृष्ट्वा सारथिं चेदमब्रवीत् ।
एषा नातिप्रतीता मे पुण्योद्याना यशस्विनी ॥
अयोध्या दृश्यते दूरात्सारथे पाण्डुमृत्तिका ।
यज्विभिर्गुणसंपन्नैर्ब्राह्मणैर्वेदपारगैः ॥
भूयिष्ठमृद्धैराकीर्णा राजर्षिवरपालिता ।
अयोध्यायां पुराशब्दः श्रूयते तुमुलो महान् ॥
समन्तान्नरनारीणां तमद्य न शृणोम्यहम् ।
उद्यानानि हि सायाह्ने क्रीडित्वोपरतैर्नरैः ॥
इत्येवमुक्त्वा भरतः सूतं तं दीनमानसः ।
तान्यनिष्टान्ययोध्यायां प्रेक्ष्य राजगृहं ययौ ॥

अपश्यंस्तु ततस्तत्र पितरं पितुरालये ।
जगाम भरतो द्रष्टुं मातरं मातुरालये ॥
अनुप्राप्तं तु तं दृष्ट्वा कैकेयी प्रोषितं सुतम् ।
उत्पपात तदा हृष्टा त्यक्त्वा सौवर्णमासनम् ॥
तं प्रत्युवाच कैकेयी प्रियवद्घोरमप्रियम् ।
अजानन्तं प्रजानन्ती राज्यलोभेन मोहिता ॥
या गतिः सर्वभूतानां तां गतिं ते पिता गतः ।
राजा महात्मा तेजस्वी यायजूकः सतां गतिः ॥
तच्छ्रुत्वा भरतो वाक्यं धर्माभिजनवाञ्छुचिः ।
पपात सहसा भूमौ पितृशोकबलार्दितः ॥
अभिषेक्ष्यति रामं तु राजा यज्ञं नु यक्ष्यते ।
इत्यहं कृतसंकल्पो हृष्टो यात्रामयासिषम् ॥
यो मे भ्राता पिता बन्धुर्यस्य दासोऽस्मि संमतः ।
तस्य मां शीघ्रमाख्याहि रामस्याक्लिष्टकर्मणः ॥
तथा पृष्टा यथान्यायमाख्यातुमुपचक्रमे ।
मातास्य युगपद्वाक्यं विप्रियं प्रियशंसया ॥
स हि राजसुतः पुत्र चीरवासा महावनम् ।
दण्डकान्सह वैदेह्या लक्ष्मणानुचरो गतः ॥
तच्छ्रुत्वा भरतस्त्रस्तो भ्रातुश्चारित्रशङ्कया ।
स्वस्य वंशस्य माहात्म्यात्प्रष्टुं समुपचक्रमे ॥
कच्चिन्न ब्राह्मणधनं हृतं रामेण कस्यचित् ।
कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥

कच्चिन्न परदारान्वा राजपुत्रोऽभिमन्यते ।
कस्मात्स दण्डकारण्ये भ्राता रामो विवासितः ॥
एवमुक्ता तु कैकेयी भरतेन महात्मना ।
उवाच वचनं हृष्टा वृथापण्डितमानिनी ॥
न ब्राह्मणधनं किंचिद्धृतं रामेण कस्यचित् ।
न रामः परदारान्स चक्षुर्भ्यामपि पश्यति ॥
मया तु पुत्र श्रुत्वैव रामस्येहाभिषेचनम् ।
याचितस्ते पिता राज्यं रामस्य च विवासनम् ॥
स स्ववृत्तिं समास्थाय पिता ते तत्तथाकरोत् ।
रामस्तु सहसौमित्रिः प्रोषितः सह सीतया ॥
तमपश्यन्प्रियं पुत्रं महीपालो महायशाः ।
पुत्रशोकपरिद्यूनः पञ्चत्वमुपपेदिवान् ॥
त्वया त्विदानीं धर्मज्ञ राजत्वमवलम्ब्यताम् ।
त्वत्कृते हि मया सर्वमिदमेवंविधं कृतम् ॥
मा शोकं मा च संतापं धैर्यमाश्रय पुत्रक ।
त्वदधीना हि नगरी राज्यं चैतदनामयम् ॥
तत्पुत्र शीघ्रं विधिना विधिज्ञैर्वसिष्ठमुख्यैः सहितो द्विजेन्द्रैः ।
संकाल्य राजानमदीनसत्त्वमात्मानमुर्व्यामभिषेचयस्व ॥
श्रुत्वा च स पितुर्वृत्तं भ्रातरौ च विवासितौ ।
भरतो दुःखसंतप्त इदं वचनमब्रवीत् ॥
किं नु कार्यं हतस्येह मम राज्येन शोचतः ।
विहीनस्याथ पित्रा च भ्रात्रा पितृसमेन च ॥

दुःखे मे दुःखमकरोर्व्रणे क्षारमिवाददाः ।
राजानं प्रेतभावस्थं कृत्वा रामं च तापसम् ॥
कुलस्य त्वमभावाय कालरात्रिरिवागता ।
अङ्गारमुपगुह्य स्म पिता मे नावबुद्धवान् ॥
मृत्युमापादितो राजा त्वया मे पापदर्शिनि ।
सुखं परिहृतं मोहात्कुलेऽस्मिन्कुलपांसनि ॥
नन्वार्योऽपि च धर्मात्मा त्वयि वृत्तिमनुत्तमाम् ।
वर्तते गुरुवृत्तिज्ञो यथा मातरि वर्तते ॥
तथा ज्येष्ठा हि मे माता कौसल्या दीर्घदर्शिनी ।
त्वयि धर्मं समास्थाय भगिन्यामिव वर्तते ॥
तस्याः पुत्रं महात्मानं चीरवल्कलवाससम् ।
प्रस्थाप्य वनवासाय कथं पापे न शोचसे ॥
सोऽहं कथमिमं भारं महाधुर्यसमुद्यतम् ।
दम्यो धुरमिवासाद्य सहेयं केन चौजसा ॥
अथवा मे भवेच्छक्तिर्योगैर्बुद्धिबलेन वा ।
सकामां न करिष्यामि त्वामहं पुत्रगर्धिनीम् ॥
न मे विकाङ्क्षा जायेत त्यक्तुं त्वां पापनिश्चयाम् ।
यदि रामस्य नावेक्षा त्वयि स्यान्मातृवत्सदा ॥
सततं राजपुत्रेषु ज्येष्ठो राजाभिषिच्यते ।
राज्ञामेतत्समं तत्स्यादिक्ष्वाकूणां विशेषतः ॥
न तु कामं करिष्यामि तवाहं पापनिश्चये ।
यया व्यसनमारब्धं जीवितान्तकरं मम ॥

एष त्विदानीमेवाहमप्रियार्थं तवानघे ।
निवर्तयिष्यामि वनाद्भ्रातर स्वजनप्रियम् ॥
निवर्तयित्वा राम च तस्याहं दीप्ततेजसः ।
दासभूतो भविष्यामि सुस्थितेनान्तरात्मना ॥
नह्यहं पापसंकल्पे पापे पापं त्वया कृतम् ।
शक्तो धारयितुं पौरैरश्रुकण्ठैर्निरीच्वित ॥
सा त्वमग्नि प्रविश वा स्वय वा विश दण्डकान् ।
रज्जुं बद्ध्वाथवा कण्ठे नहि तेऽन्यत्परायणम् ॥
ततः शत्रुघ्नभरतौ कौसल्यां प्रेक्ष्य दुःखितौ ।
पर्यष्वजेतां दुःखार्ता पतितां नष्टचेतनाम् ॥
रुदन्तौ रुदती दुःखात्समेत्यार्या मनस्विनी ।
भरतं प्रत्युवाचेदं कौसल्या भृशदुःखिता ॥
प्रस्थाप्य चीरवसनं पुत्रं मे वनवासिनम् ।
कैकेयी कं गुणं तत्र पश्यति क्रूरदर्शिनी ॥
इदं हि तव विस्तीर्णं धनधान्यसमाचितम् ।
हस्त्यश्वरथसंपूर्णं राज्यं निर्यातितं तया ॥
इत्यादिबहुभिर्वाक्यैः क्रूरैः संभर्त्सितोऽनघः ।
विव्यथे भरतो तीव्रव्रणे तुद्येव सूचिना ॥
पपात चरणौ तस्यास्तदा संभ्रान्तचेतनः ।
विलप्य बहुधासंज्ञो लब्धसंज्ञस्तदाभवत् ॥
एवं विलपमानां तां प्राञ्जलिर्भरतस्तदा ।
कौसल्यां प्रत्युवाचेदं शोकैर्बहुभिरावृताम् ॥

आर्ये कस्मादजानन्तं गर्हसे मामकल्मषम् ।
विपुलां च मम प्रीतिं स्थितां जानासि राघवे ॥
तदा तं शपथैः कष्टैः शपमानमचेतनम् ।
भरतं शोकसंतप्तं कौसल्या वाक्यमब्रवीत् ॥
मम दुःखमिदं पुत्र भूयः समुपजायते ।
शपथैः शपमानो हि प्राणानुपरुणत्सि मे ॥
दिष्ट्या न चलितो धर्मादात्मा ते सहलक्ष्मणः ।
वत्स सत्यप्रतिज्ञो हि सतां लोकानवाप्स्यसि ॥
इत्युक्त्वा चाङ्कमानीय भरतं भ्रातृवत्सलम् ।
परिष्वज्य महाबाहुं रुरोद भृशदुःखिता ॥
ततो दशाहेऽतिगते कृतशौचो नृपात्मजः ।
द्वादशेऽहनि संप्राप्ते श्राद्धकर्माण्यकारयत् ॥
ततः प्रभातसमये दिवसेऽथ चतुर्दशे ।
समेत्य राजकर्तारो भरतं वाक्यमब्रुवन् ॥
गतो दशरथः स्वर्गं यो नो गुरुतरो गुरुः ।
रामं प्रव्राज्य वै ज्येष्ठं लक्ष्मणं च महाबलम् ॥
अभिषेचय चात्मानं पाहि चास्मान्नरर्षभ ।
भरतस्तं जनं सर्वं प्रत्युवाच धृतव्रतः ॥
ज्येष्ठस्य राजता नित्यमुचिता हि कुलस्य नः ।
नैवं भवन्तो मां वक्तुमर्हन्ति कुशला जनाः ॥
रामः पूर्वो हि नो भ्राता भविष्यति महीपतिः ।
अहं त्वरण्ये वत्स्यामि वर्षाणि नव पञ्च च ॥

युज्यतां महती सेना चतुरङ्गमहाबला ।
आनयिष्याम्यहं ज्येष्ठं भ्रातरं राघव वनात् ॥
आभिषेचनिकं चैव सर्वमेतदुपस्कृतम् ।
पुरस्कृत्य गमिष्यामि रामहेतोर्वनं प्रति ॥
तत्रैव तं नरव्याघ्रमभिषिच्य पुरस्कृतम् ।
आनयिष्यामि वै राम हव्यवाहमिवाध्वरात् ॥
न सकामां करिष्यामि स्वामिमां पुत्रगृद्धिनीम् ।
वने वत्स्याम्यहं दुर्गे रामो राजा भविष्यति ॥
क्रियतां शिल्पिभिः पन्थाः समानि विषमाणि च ।
रक्षिणश्चानुसंयान्तु पथि दुर्गविचारकाः ॥
एवं संभाषमाणं तं रामहेतोर्नृपात्मजम् ।
प्रत्युवाच जनः सर्वं श्रीमद्वाक्यमनुत्तमम् ॥
एवं ते भाषमाणस्य पद्मा श्रीरुपतिष्ठताम् ।
यस्त्वं ज्येष्ठे नृपसुते पृथिवी दातुमिच्छसि ॥
एवमुक्त्वा तु धर्मात्मा भरतो भ्रातृवत्सलः ।
समीपस्थमुवाचेदं सुमन्त्रं मन्त्रकोविदम् ॥
तूर्णमुत्थाय गच्छ त्वं सुमन्त्र मम शासनात् ।
यात्रामाज्ञापय क्षिप्रं बलं चैव समानय ॥
ततो योधाङ्गनाः सर्वा भर्तॄन्सर्वान्गृहे गृहे ।
यात्रागमनमाज्ञाय त्वरयन्ति स्म हर्षिताः ॥
सज्जं तु तद्बलं दृष्ट्वा भरतो गुरुसंनिधौ ।
रथं मे त्वरयस्वेति सुमन्त्रं पार्श्वतोऽब्रवीत् ॥

भरतस्य तु तस्याज्ञां परिगृह्य प्रहर्षितः ।
रथं गृहीत्वोपययौ युक्त परमवाजिभिः ॥
ततः समुत्थितः कल्यमास्थाय स्यन्दनोत्तमम् ।
प्रययौ भरतः शीघ्र रामदर्शनकाम्यया ॥
कैकेयी च सुमित्रा च कौसल्या च यशस्विनी ।
रामानयनसंतुष्टा ययुर्यानेन भास्वता ॥
प्रहृष्टमुदिता सेना सान्वयात्कैकयीसुतम् ।
भ्रातुरानयने यातं भरत भ्रातृवत्सलम् ॥
ते गत्वा दूरमध्वानं रथयानाश्वकुञ्जरैः ।
समासेदुस्ततो गङ्गां शृङ्गवेरपुरं प्रति ॥
निवेश्य गङ्गामनु तां महानदीं चमूं विधानैः परिबर्हशोभिनीम् ।
उवास रामस्य तदा महात्मनो विचिन्तमानो भरतो निवर्तनम् ॥
ततो निविष्टां ध्वजिनीं गङ्गामन्वाश्रितां नदीम् ।
निषादराजो दृष्ट्वैव ज्ञातीन्स परितोऽब्रवीत् ॥
यदा नु खलु दुर्बुद्धिर्भरतः स्वयमागतः ।
स एष हि महाकायः कोविदारध्वजो रथे ॥
बन्धयिष्यति वा पाशैरथ वास्मान्वधिष्यति ।
अनु दाशरथिं रामं पित्रा राज्याद्विवासितम् ॥
संपन्नां श्रियमन्विच्छंस्तस्य राज्ञः सुदुर्लभाम् ।
भरतः कैकयीपुत्रो हन्तुं समधिगच्छति ॥
यदि तुष्टस्तु भरतो रामस्येह भविष्यति ।
इयं स्वस्तिमती सेना गङ्गामद्य तरिष्यति ॥

इत्युक्त्वोपायनं गृह्य मत्स्यमांसमधूनि च ।
अभिचक्राम भरतं निषादाधिपतिर्गुहः ॥
लब्ध्वानुज्ञां संप्रहृष्टो ज्ञातिभिः परिवारितः ।
आगम्य भरतं प्रह्वो गुहो वचनमब्रवीत् ॥
दाशास्त्वनुगमिष्यन्ति देशज्ञाः सुसमाहिताः ।
अहं चानुगमिष्यामि राजपुत्र महाबल ॥
कच्चिन्न दुष्टो व्रजसि रामस्याक्लिष्टकर्मणः ।
इयं ते महती सेना शङ्कां जनयतीव मे ॥
तमेवमभिभाषन्तमाकाश इव निर्मलः ।
भरतः श्लक्ष्णया वाचा गुहं वचनमब्रवीत् ॥
मा भूत्स कालो यत्कष्टं न मां शङ्कितुमर्हसि ।
राघवः स हि मे भ्राता ज्येष्ठः पितृसमो मतः ॥
तं निवर्तयितुं यामि काकुत्स्थं वनवासिनम् ।
बुद्धिरन्या न मे कार्या गुह सत्यं ब्रवीमि ते ॥
स तु संहृष्टवदनः श्रुत्वा भरतभाषितम् ।
पुनरेवाब्रवीद्वाक्यं भरतं प्रति हर्षितः ॥
धन्यस्त्वं न त्वया तुल्यं पश्यामि जगतीतले ।
अयत्नादागतं राज्यं यस्त्वं त्यक्तुमिहेच्छसि ॥
शाश्वती खलु ते कीर्तिर्लोकाननुचरिष्यति ।
यस्त्वं कृच्छ्रगतं रामं प्रत्यानयितुमिच्छसि ॥
आचचक्षेऽथ सद्भावं लक्ष्मणस्य महात्मनः ।
भरतायाप्रमेयाय गुहो गहनगोचरः ॥

तं जाग्रतं गुणैर्युक्तं वरचापेषुधारिणम् ।
भ्रातृगुप्त्यर्थमत्यन्तमहं लक्ष्मणमब्रुवम् ॥
इयं तात सुखा शय्या त्वदर्थमुपकल्पिता ।
प्रत्याश्वसिहि शेष्वास्यां सुखं राघवनन्दन ॥
सोऽहं प्रियसखं रामं शयानं सह सीतया ।
रक्षिष्यामि धनुष्पाणिः सर्वैः स्वैर्ज्ञातिभिः सह ॥
एवमस्माभिरुक्तेन लक्ष्मणेन महात्मना ।
अनुनीता वयं सर्वे धर्ममेवानुपश्यता ॥
कथ दाशरथौ भूमौ शयाने सह सीतया ।
शक्या निद्रा मया लब्धुं जीवितानि सुखानि वा ॥
परिदेवयमानस्य तस्यैवं हि महात्मनः ।
तिष्ठतो राजपुत्रस्य शर्वरी सात्यवर्तत ॥
गुहस्य वचनं श्रुत्वा भरतो भृशमप्रियम् ।
ध्यानं जगाम तत्रैव यत्र तच्छ्रुतमप्रियम् ॥
तदवस्थं तु भरतं शत्रुघ्नोऽनन्तरस्थितः ।
परिष्वज्य रुरोदोच्चैर्विसंज्ञः शोककर्शितः ॥
ततः सर्वाः समापेतुर्मातरो भरतस्य ताः ।
उपवासकृशा दीना भर्तृव्यसनकर्शिताः ॥
ताश्च तं पतितं भूमौ रुदत्यः पर्यवारयन् ।
कौसल्या त्वनुसृत्यैनं दुर्मनाः परिषस्वजे ॥
स मुहूर्तं समाश्वस्य रुदन्नेव महायशाः ।
कौसल्यां परिसान्त्व्येदं गुहं वचनमब्रवीत् ॥

भ्राता मे क्वावसद्रात्रिं क्व सीता क्व च लक्ष्मणः ।
अस्वपच्छयने कस्मिन्किं भुक्त्वा गुह शंस मे ॥
सोऽब्रवीद्भरतं हृष्टो निषादाधिपतिर्गुहः ।
यद्विध प्रतिपेदे च रामे प्रियहितेऽतिथौ ॥
एतत्तदिङ्गुदीमूलमिदमेव च तत्तृणम् ।
अस्मिन्रामश्च सीता च रात्रिं तां शयितावुभौ ॥
तच्छ्रुत्वा निपुणं सर्वं भरतः सह मन्त्रिभिः ।
इङ्गुदीमूलमागम्य रामशय्यामवैक्षत ॥
अब्रवीज्जननीः सर्वा इह तस्य महात्मनः ।
शर्वरी शयिता भूमाविदमस्य विमर्दितम् ॥
यस्मिन्विदेहराजस्य सुता च प्रियदर्शना ।
दयिता शयिता भूमौ स्नुषा दशरथस्य च ॥
इयं शय्या मम भ्रातुरिदमावर्तितं शुभम् ।
स्थण्डिले कठिने सर्वं गात्रैर्विमृदितं तृणम् ॥
हा हतोऽस्मि नृशंसोऽस्मि यत्सभार्यः कृते मम ।
ईदृशीं राघवः शय्यामधिशेते ह्यनाथवत् ॥
अद्यप्रभृति भूमौ तु शयिष्येऽहं तृणेषु वा ।
फलमूलाशनो नित्यं जटाचीराणि धारयन् ॥
तस्याहमुत्तरं कालं निवत्स्यामि सुखं वने ।
तत्प्रतिश्रुतमार्यस्य नैव मिथ्या भविष्यति ॥
प्रसाद्यमानः शिरसा मया स्वयं बहुप्रकारं यदि न प्रपत्स्यते ।
ततोऽनुवत्स्यामि चिराय राघवं वनेचरं नार्हति मामुपेक्षितुम् ॥

तत: स्वस्तिकविज्ञेयां पाण्डुकम्बलसंवृताम् ।
सनन्दिघोषां कल्याणीं गुहो नावमुपाहरत् ॥
तामारुरोह भरत: शत्रुघ्नश्च महाबल: ।
कौसल्या च सुमित्रा च याश्चान्या राजयोषित: ॥
नावश्चारुरुहुस्त्वन्ये प्लवैस्तेरुस्तथापरे ।
अन्येकुम्भघटैस्तेरुरन्ये तेरुश्च बाहुभि: ॥
सा पुण्या ध्वजिनी गङ्गां दाशै: संतारिता स्वयम् ।
मैत्रे मुहूर्ते प्रययौ प्रयागवनमुत्तमम् ॥
आश्वासयित्वा च चमूं महात्मा निवेशयित्वा च यथोपजोषम् ।
द्रष्टुं भरद्वाजमृषिप्रवर्यं ऋत्विक्सदस्यैर्भरत: प्रतस्थे ॥
भरद्वाजाश्रमं गत्वा क्रोशादेव नरर्षभ: ।
जनं सर्वमवस्थाप्य जगाम सह मन्त्रिभि: ॥
पद्भ्यामेव तु धर्मज्ञो न्यस्तशस्त्रपरिच्छद: ।
वसानो वाससी क्षौमे पुरोधाय पुरोहितम् ॥
ताभ्यामर्घ्यं च पाद्यं च दत्त्वा पश्चात्फलानि च ।
आनुपूर्व्याच्च धर्मज्ञ: पप्रच्छ कुशलं कुले ॥
अयोध्यायां बले कोशे मित्रेष्वपि च मन्त्रिषु ।
जानन्दशरथं वृत्तं न राजानमुदाहरत् ॥
वसिष्ठो भरतश्चैनं पप्रच्छतुरनामयम् ।
शरीरेऽग्निषु शिष्येषु वृक्षेषु मृगपक्षिषु ॥
तथेति तु प्रतिज्ञाय भरद्वाजो महायशा: ।
भरतं प्रत्युवाचेदं राघवस्नेहबन्धनात् ॥

किमिहागमने कार्यं तव राज्यं प्रशासतः ।
एतदाचक्ष्व सर्वं मे न हि मे शुध्यते मनः ॥
सुषुवे यममित्रघ्नं कौसल्यानन्दवर्धनम् ।
भ्रात्रा सह सभार्यो यश्चिर प्रव्राजितो वनम् ॥
कच्चिन्न तस्यापापस्य पापं कर्तुमिहेच्छसि ।
अकण्टकं भोक्तुमना राज्य तस्यानुजस्य च ॥
एवमुक्तो भरद्वाजं भरतः प्रत्युवाच ह ।
पर्यश्रुनयनो दुःखाद्वाचा संसज्जमानया ॥
हतोऽस्मि यदि मामेवं भगवानपि मन्यते ।
मत्तो न दोषमाशङ्क्य मैवं मामनुशाधि हि ॥
न चैतदिष्टं माता मे यदवोचन्मदन्तरे ।
नाहमेतेन तुष्टश्च न तद्वचनमाददे ॥
अहं तु तं नरव्याघ्रमुपयातः प्रसादकः ।
प्रतिनेतुमयोध्यायां पादौ चास्याभिवन्दितुम् ॥
तं मामेवंगतं मत्वा प्रसाद कर्तुमर्हसि ।
शंस मे भगवन्रामः क्व संप्रति महीपतिः ॥
उवाच तं भरद्वाजः प्रसादाद्भरतं वचः ॥
त्वय्येतत्पुरुषव्याघ्र युक्तं राघववंशजे ।
गुरुवृत्तिर्दमश्चैव साधूनां चानुयायिता ॥
जाने चैतन्मनस्थं ते दृढीकरणमस्त्विति ।
अपृच्छं त्वां तवात्यर्थं कीर्तिं समभिवर्धयन् ॥
जाने च रामं धर्मज्ञं ससीतं सहलक्ष्मणम् ।

अयं वसति ते भ्राता चित्रकूटे महागिरौ ॥
श्वस्तु गन्तासि तं देशं वसाद्य सह मन्त्रिभिः ।
ततस्तां रजनीं व्युष्य भरतः सपरिच्छदः ।
कृतातिथ्यो भरद्वाज कामादभिजगाम ह ॥
आमन्त्रयेऽह भगवन् कामं त्वामृषिसत्तम ।
इति पृष्टस्तु भरतं भ्रातुर्दर्शनलालसम् ॥
प्रत्युवाच महातेजा भरद्वाजो महातपाः ।
भरतार्द्धतृतीयेषु योजनेष्वजने वने ॥
चित्रकूटगिरिस्तत्र रम्यनिर्भरकानन ।
उत्तरं पार्श्वमासाद्य तस्य मदाकिनी नदी ॥
अनन्तरं तत्सरितश्चित्रकूटश्च पर्वतम् ।
तयोः पर्णकुटी तात तत्र तौ वसतो ध्रुवम् ॥
अभिवाद्य तु संसिद्धः कृत्वा चैनं प्रदक्षिणम् ।
आमन्त्र्य भरतः सैन्यं युज्यतामिति चाब्रवीत् ॥
स गत्वा दूरमध्वानं संपरिश्रान्तवाहनः ।
उवाच वचनं श्रीमान् वसिष्ठं मन्त्रिणां वरम् ॥
यादृशं लक्ष्यते रूपं यथा चैव मया श्रुतम् ।
व्यक्तं प्राप्ताः स्म तंदेशं भरद्वाजो यमब्रवीत् ॥
अयं गिरिश्चित्रकूटस्तथा मन्दाकिनी नदी ।
एतत्प्रकाशतेदूरान्नीलमेघनिभं वनम् ॥
एवमुक्तास्ततः सैन्यास्तत्र तस्थुः समन्ततः ।
तथातत्रासतस्तस्य भरतस्योपयायिनः ॥

सैन्यरेणुश्च शब्दश्च प्रादुरास्ता नभस्पृशौ ।
स तत् सैन्यसमुद्भूत शब्दं शुश्राव राघवः ॥
उवाच रामः सौमित्रि लक्ष्मण दीप्ततेजसम् ।
हन्त लक्ष्मण पश्येह सूमित्रासुप्रजास्त्वया ॥
भीमस्तनितगम्भीर तुमुलः श्रूयते स्वनः ।
राजा वा राजपुत्रो वा मृगयामटते वने ॥
अन्यद्वा श्वापद किंचित् सौमित्रे ज्ञातुमर्हसि ।
स लक्ष्मणः संत्वरितः सालमारुह्य पुष्पितम् ॥
प्रेक्षमाणो दिशः सर्वाः पूर्वां दिशमवैक्षत ।
उदङ् मुख. प्रेक्षमाणो ददर्श महती चमूम् ॥
गजाश्वरथसम्बाधां यत्तैर्युक्तां पदातिभि ।
शशंस सेनां रामाय वचनं चेदमब्रवीत् ॥
अग्निं संशमयत्वार्यः सीताच भजतां गुहाम् ।
सज्जं कुरुष्व चापं च शरांश्चकवचं तथा ॥
सम्पन्नं राज्यमिच्छंस्तु व्यक्तं प्राप्याभिषेचनम् ।
आवां हन्तुं समभ्येति कैकेय्या भरतः सुतः ॥
गृहीतधनुषावावां गिरिशीर्षश्रयावहे ।
अथवेहैव तिष्ठावः संनद्धावुद्यतायुधौ ॥
अद्यैव चित्रकूटस्य काननं निशितैः शरैः ।
छिन्दञ्छत्रुशरीराणि करिष्ये शोणितोक्षितम् ॥
शराणा धनुषश्चाहमनृणोऽस्मिमहावने ।
ससैन्यं भरतं हत्वा भविष्यामि न संशयः ॥

रामस्तु परिसान्त्व्याथ इदं वचनमब्रवीत् ।
किमत्र धनुषा कार्यमसिना वा स चर्म्मणा ॥
पितुः सत्यं प्रतिश्रुत्य हत्वा भरतमाहवे ।
किं करिष्यामि राज्येन सापवादेन लक्ष्मण ॥
धर्ममर्थञ्च कामं च पृथिवीं वापि लक्ष्मण ।
इच्छामि भवतामर्थे एतत् प्रतिशृणोमि ते ॥
मन्येऽहमागतोऽयोध्यां भरतो भ्रातृवत्सलः ।
श्रुत्वा प्रव्राजितं मां हि जटावल्कलधारिण ॥
अम्बाञ्च केकयी रुष्य भरतश्चाप्रियं वदन् ।
प्रसाद्य पितरं श्रीमान् राज्यं मे दातुमागत. ॥
नहि ते निष्ठुरं वाच्यो भरतो नाप्रिय वचः ।
निरीक्ष्य स मुहूर्तन्तु ददर्श भरतो गृहम् ॥
उटजे राममासीनं जटामण्डलधारिणम् ।
स्थण्डिले दर्भसंस्तीर्णे सीतया लक्ष्मणेन च ॥
अभ्यधावत धर्म्मात्मा भरतः कैकयीसुतः ।
पादावप्राप्य रामस्य पपात भरतो रुदन् ॥
शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ रुदन् ।
तावुभौ च समालिङ्ग्य रामोऽप्यश्रून्यवर्तयत् ॥
भ्रातरं भरतं रामः परिजग्राह पाणिना ।
आघ्राय रामस्तं मूर्ध्नि परिष्वज्य च राघवम् ॥
अङ्के भरतमारोप्य पर्य्यपृच्छत सादरम् ।
क्वनुतेऽभूत् पिता तात यदरण्यं त्वमागतः ॥

नहि त्वं जीवतस्तस्य वनमागन्तुमर्हसि ।
क्वचिन्न दीनः सहसा राजा लोकान्तरं गतः ॥
यन्निमित्तमिम देशं कृष्णाजिनजटाधरः ।
हित्वा राज्यं प्रविष्टस्त्वं तत्सत्यं वक्तुमर्हसि ॥
इत्युक्तः केकयीपुत्रः काकुत्स्थेन महात्मना ।
प्रगृह्य बलवद् भूयः प्राञ्जलिर्वाक्यमब्रवीत् ॥
आर्य तातः परित्यज्य कृत्वा कर्म्मसुदुष्करम् ।
गतः स्वर्गं महाबाहु पुत्रशोकाभिपीडितः ॥
स्त्रिया नियुक्तः कैकेय्या मम मात्रा परंतप ।
चकार सा महत्पापमिदमात्मयशोहरम् ॥
सा राज्यफलमप्राप्य विधवा शोककर्शिता ।
पतिष्यति महाघोरे नरके जननी मम ॥
इमाः प्रकृतयः सर्वा विधवा मातरस्त्रयः ।
त्वत्सकाशमनुप्राप्ताः प्रसादं कर्तुमर्हसि ॥
एवमुक्त्वा महाबाहु सबाष्पः केकयीसुतः ।
रामस्य शिरसा पादौ जग्राह भरतः पुनः ॥
भ्रातरं भरतं रामः परिष्वज्येदमब्रवीत् ।
न दोषं त्वयि पश्यामि सूक्ष्ममप्यरिसूदन ॥
न चापि जननीं बाल्यान् त्वं विगर्हितुमर्हसि ।
राज्यहेतोः कथं पापमाचरेत् मद्विधो जन. ॥
रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह ।
ज्येष्ठे पुत्रे स्थिते राजा न कनीयान् भवेन्नृपः ॥

स समृद्धां मया सार्द्धमयोध्यां गच्छ राघव ।
निष्क्रान्तमात्रे भवति सहसीते सलक्ष्मणे ॥
दुःखशोकाभिभूतस्तु राजा त्रिदिवमभ्यगात् ।
उत्तिष्ठ पुरुषव्याघ्र क्रियतामुदकं पितुः ॥
अहं चायञ्च शत्रुघ्नः पूर्वमेव कृतोदकौ ।
स रामः स्वर्गतं श्रुत्वा पितरं पृथिवीपतिम् ॥
उवाच भरतं वाक्यं धर्मात्मा धर्मसंहितम् ।
यत्राहमपि तेनैव नियुक्तः पुण्यकर्मणा ॥
तत्रैवाहं करिष्यामि पितुरार्यस्य शासनम् ।
न मया शासनं तस्य त्यक्तुं न्याय्यमरिन्दम ॥
स त्वयापि सदा मान्यः स वै बन्धुः स नः पिता ।
अयोध्यां गच्छ भरत प्रकृतीरुपरञ्जय ॥
शत्रुघ्नसहितो वीर सहसर्वैर्द्विजातिभिः ।
आश्वासयन्तं भरतं जाबालिर्ब्राह्मणोत्तमः ।
उवाच रामं धर्मज्ञं धर्मापेतमिदं वचः ॥
सतां बुद्धिं पुरस्कृत्य सर्वलोकनिदर्शिनीम् ।
राज्यं स त्वं निगृह्णीष्व भरतेन प्रसादितः ॥
जाबालेस्तु वचः श्रुत्वा रामः सत्यपराक्रमः ।
उवाच परयासूक्त्या बुद्ध्या विप्रतिपन्नया ॥
कथं ह्यहं प्रतिज्ञाय वनवासमिमं गुरोः ।
भरतस्य करिष्यामि वचो हित्वा गुरोर्वचः ॥
क्रुद्धमाज्ञाय रामं तु वशिष्ठः प्रत्युवाच ह ।

स राघवाणां कुलधर्ममात्मनः सनातनं नाद्य विहन्तुमर्हसि ।
प्रभूतरत्नामनुशाधि मेदिनीं प्रभूतराष्ट्रां पितृवन्महायशाः ॥

स तेऽहं पितुराचार्यस्तव चैव परंतप ।
मम त्वं वचनं कुर्वन्नातिवर्तेः सतां गतिम् ॥
इमा हि ते परिषदो ज्ञातयश्च नृपास्तथा ।
एषु तात चरन्धर्मं नातिवर्तेः सतां गतिम् ॥
वृद्धाया धर्मशीलाया मातुर्नार्हस्यवर्तितुम् ।
अस्या हि वचनं कुर्वन्नातिवर्तेः सतां गतिम् ॥
भरतस्य वचः कुर्वन्याचमानस्य राघव ।
आत्मानं नातिवर्तेस्त्वं सत्यधर्मपराक्रम ॥
एवं मधुरमुक्तः स गुरुणा राघवः स्वयम् ।
प्रत्युवाच समासीनं वसिष्ठं पुरुषर्षभः ॥
स हि राजा दशरथः पिता जनयिता मम ।
आज्ञापयन्मां यत्तस्य न तन्मिथ्या भविष्यति ॥
एवमुक्तेन रामेण भरतः प्रत्यनन्तरम् ।
उवाच विपुलोरस्कः सूतं परमदुर्मनाः ॥
इह तु स्थण्डिले शीघ्रं कुशानास्तर सारथे ।
आर्यं प्रत्युपवेक्ष्यामि यावन्मे संप्रसीदति ॥
निराहारो निरालोको धनहीनो यथा द्विजः ।
शये पुरस्ताच्छालायां यावन्मां प्रतियास्यति ॥
स तु राममवेक्षन्तं सुमन्त्रं प्रेक्ष्य दुर्मनाः ।
कुशोत्तरमुपस्थाप्य भूमावेवास्थितः स्वयम् ॥

तमुवाच महातेजा रामो राजर्षिसत्तमः ।
किं मां भरत कुर्वाणं तात प्रत्युपवेक्ष्यसे ॥
उत्तिष्ठ नरशार्दूल हित्वैतद्दारुणं व्रतम् ।
पुरवर्यामितः क्षिप्रमयोध्यां याहि राघव ॥
अथोत्थाय जलं स्पृष्ट्वा भरतो वाक्यमब्रवीत् ।
शृण्वन्तु मे परिषदो मन्त्रिणः शृणुयुस्तथा ॥
न याचे पितरं राज्यं नानुशासामि मातरम् ।
एवं परमधर्मज्ञं नानुजानामि राघवम् ॥
यदि त्ववश्यं वस्तव्यं कर्तव्यं च पितुर्वचः ।
अहमेव निवत्स्यामि चतुर्दश वने समाः ॥
धर्मात्मा तस्य सत्येन भ्रातुर्वाक्येन विस्मितः ।
उवाच रामः संप्रेक्ष्य पौरजानपदं जनम् ॥
विक्रीतमाहितं क्रीतं यत्पित्रा जीवता मम ।
न तल्लोपयितुं शक्यं मया वा भरतेन वा ॥
जानामि भरतं क्षान्तं गुरुसत्कारकारिणम् ।
सर्वमेवात्र कल्याणं सत्यसंधे महात्मनि ॥
अनेन धर्मशीलेन वनात्प्रत्यागतः पुनः ।
भ्रात्रा सह भविष्यामि पृथिव्याः पतिरुत्तमः ॥
त्रस्तगात्रस्तु भरतः स वाचा सज्जमानया ।
कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत् ॥
राम धर्ममिमं प्रेक्ष्य कुलधर्मानुसंततम् ।
कर्तुमर्हसि काकुत्स्थ मम मातुश्च याचनाम् ॥

इद राज्य महाप्राज्ञ स्थापय प्रतिपद्य हि ।
शक्तिमान्स हि काकुत्स्थ लोकस्य परिपालने ॥
एवमुक्त्वापतद्भ्रातु पादयोर्भरतस्तदा ।
भृश सप्रार्थयामास राघवेऽतिप्रिय वदन् ॥
तमङ्के भ्रातर कृत्वा रामो वचनमब्रवीत् ।
आगता त्वामियं बुद्धि स्वजा वैनयिकी च या ।
भृशमुत्सहसे तात रक्षितुं पृथिवीमपि ॥
अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभि ।
सर्वकार्याणि संमन्त्र्य महान्त्यपि हि कारय ॥
लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान्वा हिमं त्यजेत् ।
अतीयात्सागरो वेला न प्रतिज्ञामहं पितु. ॥
कामाद्वा तात लोभाद्वा मात्रा तुभ्यमिद कृतम् ।
न तन्मनसि कर्तव्यं वर्तितव्यं च मातृवत् ॥
एवं ब्रुवाणं भरतः कौसल्यासुतमब्रवीत् ।
तेजसादित्यसंकाशं प्रतिपच्चन्द्रदर्शनम् ॥
अधिरोहार्यपादाभ्या पादुके हेमभूषिते ।
एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥
सोऽधिरुह्य नरव्याघ्रः पादुके व्यवमुच्य च ।
प्रायच्छत्सुमहातेजा भरताय महात्मने ॥
स्वपादुके संप्रणम्य रामं वचनमब्रवीत् ।
चतुर्दश हि वर्षाणि जटाचीरधरो ह्ययम् ॥
फलमूलाशनो वीर भवेयं रघुनन्दन ।

तवागमनमाकाङ्क्षन्वसन्वै नगराद्बहिः ॥
तव पादुकयोर्न्यस्य राज्यतन्त्रं परंतप ।
चतुर्दशे हि संपूर्णे वर्षेऽहनि रघूत्तम ॥
न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् ।
तथेति च प्रतिज्ञाय तं परिष्वज्य सादरम् ॥
शत्रुघ्नं च परिष्वज्य वचनं चेदमब्रवीत् ।
मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति ॥
मया च सीतया चैव शप्तोऽसि रघुनन्दन ।
इत्युक्त्वाश्रुपरीताक्षो भ्रातरं विससर्ज ह ॥
तं मातरो बाष्पगृहीतकण्ठ्यो दुःखेन नामन्त्रयितुं हि शेकुः ।
स चैव मातृरभिवाद्य सर्वा रुदन्कुटीं स्वां प्रविवेश रामः ॥
ततः शिरसि कृत्वा तु पादुके भरतस्तदा ।
आरुरोह रथं हृष्टः शत्रुघ्नसहितस्तदा ॥
ततः प्रदक्षिणं कृत्वा भरद्वाजं पुनः पुनः ।
भरतस्तु ययौ श्रीमानयोध्यां सह मन्त्रिभिः ॥
ततो निक्षिप्य मातृस्ता अयोध्यायां दृढव्रतः ।
भरतः शोकसंतप्तो गुरूनिदमथाब्रवीत् ॥
नन्दिग्रामं गमिष्यामि सर्वानामन्त्रयेऽत्र वः ।
तत्र दुःखमिदं सर्वं सहिष्ये राघवं विना ॥
भरतस्तु ततः क्षिप्रं नन्दिग्रामं प्रविश्य सः ।
अवतीर्य रथात्तूर्णं गुरूनिदमभाषत ॥
एतद्राज्यं मम भ्रात्रा दत्तं संन्यासमुत्तमम् ।

योगच्छेमवहे चेमे पादुके हेमभूषिते ॥
भरतः शिरसा कृत्वा संन्यासं पादुके तत ।
अब्रवीद्दुःखसतप्त. सर्व प्रकृतिमण्डलम् ॥
छत्रं धारयत क्षिप्रमार्यपादाविमौ मतौ ।
आभ्यां राज्ये स्थितो धर्म. पादुकाभ्यां गुरोर्मम ॥
भ्रात्रा तु मयि संन्यासो निक्षिप्त. सौहृदादयम ।
तमिमं पालयिष्यामि राघवागमनं प्रति ॥
ततो निक्षिप्तभारोऽहं राघवेण समागत ।
निवेद्य गुरवे राज्य भजिष्ये गुरुवर्तिताम ॥
राघवाय च सन्यासं दत्वेमे वरपादुके ।
राज्य चेदमयोध्यां च धूतपापो भवाम्यहम ॥
स वल्कलजटाधारी मुनिवेषधर प्रभु. ।
नन्दिग्रामेऽवसद्वीर. ससैन्यो भरतस्तदा ॥
सबालव्यजनं छत्र धारयामास स स्वयम ।
भरत· शासनं सर्व पादुकाभ्यां निवेदयन ॥
प्रतियाते तु भरते वसन्रामस्तदा वने ।
न तत्रारोचयद्वासं कारणैर्बहुभिस्तदा ॥
सोऽत्रेराश्रममासाद्य त ववन्दे महायशा ।
स्वयमातिथ्यमादिश्य सर्वमस्य सुसत्कृतम ।
तं चापि भगवानत्रि· पुत्रवत्प्रत्यपद्यत ॥
एष पन्था महर्षीणां फलान्याहरतां वने ॥
अनेन तु वनं दुर्गं गन्तुं राघव ते क्षमम ।

इतीरित. प्राञ्जलिभिस्तपस्विभिर्द्विजै. कृतस्वस्त्ययन· परन्तपः।
वनं सभार्यः प्रविवेश राघव स लक्ष्मण· सूर्य इवाभ्रमण्डलम्॥

प्रविश्य तु महारण्य दण्डकारण्यमात्मवान्।
रामो ददर्श दुर्धर्षस्तापसाश्रममण्डलम्॥
दिव्यज्ञानोपपन्नास्ते रामं दृष्ट्वा महर्षय·।
अभिजग्मुस्तदा प्रीता वैदेहीं च यशस्विनीम्॥
कृतातिथ्योऽथ रामस्तु सूर्यस्योदयनं प्रति।
हत्वा तु तं भीमबलं विराध राक्षसं वने।
तत· सीतां परिष्वज्य समाश्वास्य च वीर्यवान्॥
अब्रवीद्भ्रातरं रामो लक्ष्मण दीप्ततेजसम्।
कष्टं वनमिदं दुर्गं न च स्मो वनगोचराः॥
अभिगच्छामहे शीघ्र शरभङ्ग तपोवनम्।
आश्रमं शरभङ्गस्य राघवोऽभिजगाम ह॥
शरभङ्गे दिवं प्राप्ते मुनिसङ्घाः समागताः।
अभ्यगच्छन्त काकुत्स्थं रामं ज्वलिततेजसम्॥
रामस्तु सहितो भ्रात्रा सीतया च परंतप·।
सुतीक्ष्णस्याश्रमपद जगाम सह तैर्द्विजैः॥
रामस्तु सहसौमित्रि· सुतीक्ष्णेनाभिपूजित.।
परिणाम्य निशां तत्र प्रभाते प्रत्यबुध्यत॥
उत्थाय च यथाकाल राघव· सहसीतया॥
अग्रतः प्रययौ रामः सीता मध्ये सुशोभना।
पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणोऽनुजगाम ह॥

सुतीक्ष्णेनापदिष्टेन गत्वा तेन पथा सुखम् ।
इद परमसंहृष्टो वाक्य लक्ष्मणमब्रवीत् ॥
अथ दीर्घायुपस्तस्य लोके विश्रुतकर्मण ।
अगस्त्यस्याश्रम श्रीमान्विनीतमृगसेवित ॥
प्रविष्टवाश्रमपदं सीतया सहभार्यया ।
गृहीतचापौ तु नराधिपात्मजौ विषक्ततूणी समरेष्वकातरौ ।
यथोपदिष्टेन पथा महर्षिणा प्रजग्मतु पञ्चवटीं समाहितौ ॥
ततः पञ्चवटीं गत्वा नानाव्यालमृगायुताम् ।
उवाच लक्ष्मण रामो भ्रातर दीप्ततेजसम् ॥
आगता स्म यथोद्दिष्टं य देश मुनिरब्रवीत् ।
अय पञ्चवटीदेश· सौम्य पुष्पितकानन. ॥
आश्रम कतरस्मिन्नो देशे भवति संमत ॥
एवमुक्तस्तु रामेण लक्ष्मण. परवीरहा ।
इहाश्रमपद रम्य यथा वा कर्त्तुमर्हसि ॥
अचिरेणाश्रमं भ्रातुश्चकार सुमहाबल· ॥
स राम· पर्णशालायामासीन· सह सीतया ।
लक्ष्मणेन सह भ्रात्रा चकार विविधा. कथाः ॥
तदासीनस्य रामस्य कथासंसक्तचेतसः ।
तं देशं राक्षसी काचिदाजगाम यदृच्छया ॥
सा तु शूर्पणखा नाम दशग्रीवस्य रक्षस· ।
भगिनी राममासाद्य ददर्श त्रिदशोपमम् ॥
बभूवेन्द्रोपमं दृष्ट्वा राक्षसी काममोहिता ।

सुमुखं दुर्मुखी रामं वृत्तमध्यं महोदरी ॥
तां तु शूर्पणखां रामः कामपाशावपाशिताम् ।
स्वेच्छया श्लक्ष्णया वाचा स्मितपूर्वमथाब्रवीत् ॥
कृतदारोऽस्मि भवति भार्येयं दयिता मम ।
त्वद्विधानां तु नारीणां सुदुःखा ससपत्नता ॥
अनुजस्त्वेष मे भ्राता शीलवान्प्रियदर्शनः ।
श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्यवान् ॥
अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति ।
एनं भज विशालाक्षि भर्तारं भ्रातरं मम ॥
इति रामेण सा प्रोक्ता राक्षसी काममोहिता ।
विसृज्य राम सहसा ततो लक्ष्मणमब्रवीत ॥
अस्य रूपस्य ते युक्ता भार्याहं वरवर्णिनी ।
मया सह सुखं सर्वान्दण्डकान्विचरिष्यसि ॥
एवमुक्तस्तु सौमित्री राक्षस्या वाक्यकोविदः ।
ततः शूर्पनखीं स्मित्वा लक्ष्मणो युक्तमब्रवीत् ॥
कथं दासस्य मे दासी भार्या भवितुमिच्छसि ।
सोऽहमार्येण परवान्भ्रात्रा कमलवर्णिनी ॥
समृद्धार्थस्य सिद्धार्था मुदितामलवर्णिनी ।
आर्यस्य त्वं विशालाक्षि भार्या भव यवीयसी ॥
इति सा लक्ष्मणेनोक्ता कराला निर्णतोदरी ।
मन्यते तद्वचः सत्यं परिहासाविचक्षणा ॥
सा रामं पर्णशालायामुपविष्टं परंतपम् ।

सीतया सह दुर्धर्षमब्रवीत्काममोहिता ॥

इमा विरूपामसती करालां निर्णतोदरीम् ।
वृद्धां भार्यामवष्टभ्य न मां त्वं बहु मन्यसे ।
अद्ये मां भक्षयिष्यामि पश्यतस्तव मानुषीम् ।
त्वया सह चरिष्यामि नि सपत्ना यथासुखम् ।
तां मृत्युपाशप्रतिमामापतन्तीं महाबल ।
निगृह्य राम कुपितस्ततो लक्ष्मणमब्रवीत् ।
इमां विरूपामसतीमतिमत्तां महोदरीम् ।
राक्षसीं पुरुषव्याघ्र विरूपयितुमर्हसि ॥
इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य पश्यतः ।
उद्धृत्य खड्गं चिच्छेद कर्णनासे महाबल ॥
निकृत्तकर्णनासा तु विस्वरं सा विनद्य च ।
यथागतं प्रदुद्राव घोरा शूर्पणखा वनम् ॥

ततस्तु सा राक्षसमङ्घसंवृतं खरं जनस्थानगतं विरूपिता ।
उपेत्य तं भ्रातरमुग्रतेजसं पपात भूमौ गगनाद्यथाशनिः ॥
ततः सभार्यं भयमोहमूर्छिता सलक्ष्मणं राघवमागतं वनम् ।
विरूपणं चात्मनि शोणितोक्षिता शशंस सर्वं भगिनी खरस्य सा ॥
प्रवृद्धमन्युस्तु खरः खरस्वरो रिपोर्वधार्थं त्वरितो यथान्तकः ।
अचूचुदत्सारथिमुन्नदन्पुनर्महाबलो मेघ इवाश्मवर्षवान् ॥
सा भीमवेगा समराभिकाङ्क्षिणी सुदारुणा राक्षसवीरसेना ।
तौ राजपुत्रौ सहसाभ्युपेता माला ग्रहाणामिव चन्द्रसूर्यौ ॥

आश्रमं प्रतियाते तु खरे खरपराक्रमे ।

तानेवौत्पातिकान् राम सहभ्रात्रा ददर्श ह ।
रामोऽपि चारयश्चक्षु. सर्वतो रणपण्डित ।
वितत्य च धनुर्भीम तूण्याश्चोद्धृत्य सायकान ।
दुष्प्रेक्ष्यश्चाभवत्क्रुद्धो युगान्ताग्निरिव ज्वलन् ॥
चतुर्दशसहस्राणि रक्षसा भीमकर्मणाम् ।
हतान्येकेन रामेण मानुषेण पदातिना ॥
निहतं दूषणं दृष्ट्वा रणे त्रिशिरसा सह ।
खरस्याप्यभवत्त्रासो दृष्ट्वा रामस्य विक्रमम् ॥
तत पावकसंकाशं वधाय समरे शरम् ।
खरस्य रामो जग्राह ब्रह्मदण्डमिवापरम् ॥
स पपात खरो भूमौ दह्यमानः शराग्निना ।
रुद्रेणेव विनिर्दग्धः श्वेतारण्ये यथान्धक ॥
ततस्तु तं राक्षसमङ्घमर्दनं संपूज्यमानं मुदितैर्महात्मभि ।
पुन परिष्वज्य मुदान्वितानना बभूव हृष्टा जनकात्मजा तदा ॥
त्वरमाणस्ततो गत्वा जनस्थानादकम्पन ।
प्रविश्य लङ्कां वेगेन रावण वाक्यमब्रवीत् ॥
पुत्रो दशरथस्यास्ति सिंहसंहननो युवा ।
रामो नाम महास्कन्धो वृत्तायतमहाभुज ॥
हतस्तेन जनस्थाने खरश्च सहदूषणः ॥
अकम्पनवचः श्रुत्वा रावणो वाक्यमब्रवीत् ।
गमिष्यामि जनस्थानं रामं हन्तुं सलक्ष्मणम् ॥
अथैवमुक्ते वचने प्रोवाचेदमकम्पनः ।

नहि रामो दशग्रीव शक्यो जेतुं रणे त्वया ॥
तस्यापहर भार्यां त्वं त प्रमथ्य महावने ।
सीतया रहितो रामो न चैव हि भविष्यति ॥
अरोचयत तद्वाक्यं रावणो राक्षसाधिपः ।
चिन्तयित्वा महाबाहुरकम्पनमुवाच ह ।
आनेष्यामि च वैदेहीमिमां हृष्टो महापुरीम् ॥
तदेवमुक्त्वा प्रययौ खरयुक्तेन रावण ।
स दूरे चाश्रम गत्वा ताटकेयमुपागमत् ॥
मारिचेनार्च्चितो राजा भक्ष्यभोज्यैरमानुषैः ।
तत पश्चादिद वाक्यमब्रवीद् वाक्यकोविद ॥
आरक्षो मे हतस्तात रामेणाक्लिष्टकर्म्मणा ।
तस्य मे कुरु साचिव्यं तस्य भार्यापहारणे ॥
राक्षसेन्द्रवचः श्रुत्वा मारीचो वाक्यमब्रवीत् ॥
आख्याता केन वा सीता मित्ररूपेण शत्रुणा ।
सीतामिहानयस्वेति को ब्रवीति ब्रवीहि मे ॥
प्रसीद लङ्केश्वर राक्षसेन्द्र लङ्कां प्रसन्नो भव साधु गच्छ ।
त्वं स्वेषु दारेषु रमस्व नित्य रामः सभार्यो रमतां वनेषु ॥
एवमुक्तो दशग्रीवो मारीचेन स रावण. ।
न्यवर्तत पुरी लङ्कां विवेश च गृहोत्तमम् ॥
ततः शूर्पणखा दीप्ता रावणं लोकरावणम् ।
अमात्यमध्ये संक्रुद्धा परुषं वाक्यमब्रवीत् ॥
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।

हतान्येकेन रामेण खरश्च सहदूषणः ॥
त्वं तु लुब्धः प्रमत्तश्च पराधीनश्च राक्षस ।
विषयं स्वे समुत्पन्नं यद्भयं नावबुध्यसे ॥
रामस्य तु विशालाक्षी पूर्णेन्दुसदृशानना ।
धर्मपत्नी प्रिया नित्यं भर्तुः प्रियहिते रता ॥
भार्यार्थे तु तवानेतुमुद्यताहं वराननाम् ।
रोचते यदि ते वाक्यं ममैतद्राक्षसेश्वर ।
क्रियतां निर्विशङ्केन वचनं मम रावण ॥
विज्ञायैषामशक्तिं च क्रियतां च महाबल ।
सीता तवानवद्याङ्गी भार्यात्वे राक्षसेश्वर ॥
ततः शूर्पणखावाक्यं तच्छ्रुत्वा रोमहर्षणम् ।
सूतं संचोदयामास रथः संयुज्यतामिति ॥
स रावणः समागम्य विधिवत्तेन रक्षसा ।
मारीचेनार्चितो राजा सर्वकामैरमानुषैः ॥
तं स्वयं पूजयित्वा च भोजनेनोदकेन च ।
अर्थोपहितया वाचा मारीचो वाक्यमब्रवीत् ॥
कच्चित्ते कुशलं राजँल्लङ्कायां राक्षसेश्वर ।
केनार्थेन पुनस्त्वं वै तूर्णमेव इहागतः ॥
एवमुक्तो महातेजा मारीचेन स रावणः ।
ततः पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ॥
एतदर्थमहं प्राप्तस्त्वत्समीपं निशाचर ।
शृणु तत्कर्म साहाय्यं यत्कार्यं वचनान्मम ।

सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभि ।
आश्रमे तस्य रामस्य सीताया प्रमुखे चर ॥
त्वा तु नि सशय सीता दृष्ट्वा तु मृगरूपिणम् ।
गृह्यतामिति भर्तार लक्ष्मण चाभिधास्यति ॥
ततस्तयोरपाये तु शून्ये सीतां यथासुखम् ।
निराबाधो हरिष्यामि राहुश्चन्द्रप्रभामिव ॥
तच्छ्रुत्वा राक्षसेन्द्रस्य वाक्यं वाक्यविशारद ।
प्रत्युवाच महातेजा मारीचो राक्षसेश्वरम् ॥
सुलभा पुरुषा राजन्सततं प्रियवादिन ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥
न नूनं बुध्यसे राम महावीर्यगुणोन्नतम् ।
अयुक्तचारश्चपलो महेन्द्रवरुणोपमम् ॥
तस्य वै नरसिंहस्य सिंहोरस्कस्य भामिनी ।
न सा धर्षयितुं शक्या मैथिल्योजस्विन' प्रिया ॥
अहं तु मन्ये तव न क्षम रणे समागमं कोसलराजसूनुना ।
इदं हि भूयः शृणु वाक्यमुत्तमं क्षमं च युक्तं च निशाचराधिप ॥
निवार्यमाणः सुहृदा मया भृश प्रसह्य सीतां यदि धर्षयिष्यसि ।
गमिष्यसि क्षीणबलः सबान्धवो यमक्षयं रामशरास्तजीवितः ॥
मारीचस्य तु तद्वाक्यं क्षमं युक्तं च रावणः ।
उक्तो न प्रतिजग्राह मर्तुकाम इवौषधम् ॥
तं पथ्यहितवक्तार मारीचं राक्षसाधिपः ।
अब्रवीत्परुषं वाक्यमयुक्तं कालचोदितः ॥

आसाद्य त जीवितसंशयस्ते मृत्युर्ध्रुवो ह्यद्य मया विरुध्यत ।
एतद्यथावत्परिगण्य बुद्ध्या यदत्र पथ्यं कुरु तत्तथा त्वम् ॥

आज्ञप्तो रावणेनेत्थं प्रतिकूलं च राजवत् ।
अब्रवीत्परुषं वाक्यं नि शङ्को राक्षसाधिपम ॥
केनायमुपदिष्टस्ते विनाशः पापकर्मणा ।
सपुत्रस्य सराज्यस्य सामात्यस्य निशाचर ॥

निवार्यमाणस्तु मया हितैषिणा न मृष्यसे वाक्यमिद निशाचर ।
परेतकल्पा हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम ॥

एवमुक्त्वा तु परुषं मारीचो रावणं ततः ।
गच्छावेत्यब्रवीद्दीनो भयाद्रात्रिचरप्रभो ॥
नहि रामं पराक्रम्य जीवन्प्रतिनिवर्तते ।
वर्तते प्रतिरूपोऽसौ यमदण्डहतस्य ते ॥
मनोहरस्निग्धवर्णो रत्नैर्नानाविधैर्वृत. ।
क्षणेन राक्षसो जातो मृग परमशोभन ॥
वनं प्रज्वलयन्रम्यं रामाश्रमपदं च तत् ।
मनोहरं दर्शनीय रूपं कृत्वा स राक्षस ॥
मुक्तामणिविचित्राङ्गं ददर्श परमाङ्गना ।
सा तं संप्रेक्ष्य सुश्रोणी कुसुमानि विचिन्वती ॥
भर्तारमपि चक्रन्द लक्ष्मणं चैव सायुधम् ।
आर्यपुत्राभिरामोऽसौ मृगो हरति मे मन ॥
आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ।
लोभितस्तेन रूपेण सीतया च प्रचोदितः ॥

उवाच राघवो हृष्टो भ्रातरं लक्ष्मणं वचः ।
यावद्गच्छामि सौमित्रे मृगमानयितुं द्रुतम् ॥
पश्य लक्ष्मण वैदेह्या मृगत्वचि गता स्पृहाम् ।
अप्रमत्तेन ते भाव्यमाश्रमस्थेन सीतया ॥
त्वचा प्रधानया ह्येष मृगोऽद्य न भविष्यति ।
दृष्ट्वा रामो महातेजास्तं हन्तुं कृतनिश्चयः ।
मुमोच ज्वलितं दीप्तमस्त्रं ब्रह्मविनिर्मितम् ॥
व्यनदद्भैरवं नादं धरण्यामल्पजीवितः ।
म्रियमाणस्तु मारीचो जहौ तां कृत्रिमां तनुम् ॥
स प्राप्तकालमाज्ञाय चकार च ततः स्वनम् ।
सदृशं राघवस्यैव हा सीते लक्ष्मणेति च ॥
तं दृष्ट्वा पतितं भूमौ राक्षसं भीमदर्शनम् ।
रामो रुधिरसिक्ताङ्गं चेष्टमानं महीतले ॥
जगाम मनसा सीतां लक्ष्मणस्य वचः स्मरन् ।
हा सीते लक्ष्मणेत्येवमाक्रुश्य तु महास्वनम् ॥
ममार राक्षसः सोऽयं श्रुत्वा सीता कथं भवेत् ।
लक्ष्मणश्च महाबाहुः कामवस्थां गमिष्यति ॥
इति संचिन्त्य धर्मात्मा रामो हृष्टतनूरुहः ।
त्वरमाणो जनस्थानं ससाराभिमुखं तदा ॥
आर्तस्वरं तु तं भर्तुर्विज्ञाय सदृशं वने ।
उवाच लक्ष्मणं सीता गच्छ जानीहि राघवम् ॥
अब्रवील्लक्ष्मणस्त्रस्तां सीतां मृगवधूमिव ।

पन्नगासुरगन्धर्वैर्देवदानवराक्षसैः ॥
अशक्यस्तव वैदेहि भर्ता जेतुं न संशयः ।
हृदयं निर्वृतं तेऽस्तु संतापस्त्यज्यतां तव ॥
आगमिष्यति ते भर्ता शीघ्रं हत्वा मृगोत्तमम् ।
न्यासभूतासि वैदेहि न्यस्ता मयि महात्मना ॥
रामेण त्वं वरारोहे न त्वां त्यक्तुमिहोत्सहे ।
लक्ष्मणेनैवमुक्ता तु क्रुद्धा संरक्तलोचना ॥
अब्रवीत्परुषं वाक्यं लक्ष्मणं सत्यवादिनम् ।
अनार्य करुणारम्भ नृशंस कुलपांसन ॥
अहं तव प्रियं मन्ये रामस्य व्यसनं महत् ।
इत्युक्तः परुषं वाक्यं सीतया रोमहर्षणम् ॥
अब्रवील्लक्ष्मणः सीतां प्राञ्जलिः स जितेन्द्रियः ।
गच्छामि यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने ॥
रक्षन्तु त्वां विशालाक्षि समग्रा वनदेवताः ।
तया परुषमुक्तस्तु कुपितो राघवानुजः ॥
स विकाङ्क्षन्भृशं रामं प्रतस्थे न चिरादिव ।
तदासाद्य दशग्रीवः क्षिप्रमन्तरमास्थितः ॥
अभिचक्राम वैदेहीं परिव्राजकरूपधृक् ।
रहितां सूर्यचन्द्राभ्यां संध्यामिव महत्तमः ॥
तामपश्यत्ततो बालां राजपुत्रीं यशस्विनीम् ।
द्विजातिवेषेण समीक्ष्य मैथिली समागतं पात्रकुसुम्भधारिणम् ।
अशक्यमुद्द्रष्टुमुपायदर्शनान्न्यमन्त्रयद्ब्राह्मणवत्तथागतम् ॥

इयं वृसी ब्राह्मण काममास्यतामिदं च पाद्यं प्रतिगृह्यतामिति ।
इदं च सिद्धं वनजातमुत्तमं त्वदर्थमव्यग्रमिहोपभुज्यताम् ॥

रावणेन तु वैदेही तदा पृष्टा जिहीर्षुणा ।
परिव्राजकरूपेण शशंसात्मानमात्मना ॥
ब्राह्मणश्चातिथिश्चैष अनुक्तो हि शपेत माम् ।
इति ध्यात्वा मुहूर्तं तु सीता वचनमब्रवीत् ॥
दुहिता जनकस्याहं मैथिलस्य महात्मनः ।
सीता नाम्नास्मि भद्रं ते रामस्य महिषी प्रिया ॥
स त्वं नाम च गोत्रं च कुलमाचक्ष्व तत्त्वतः ।
एकश्च दण्डकारण्ये किमर्थं चरसि द्विज ॥
एवं ब्रुवत्यां सीतायां रामपत्न्या महाबलः ।
प्रतिवाचोत्तरं तीव्रं रावणो राक्षसाधिपः ॥
येन वित्रासिता लोकाः सदेवासुरमानुषाः ।
अहं स रावणो नाम सीते रक्षोगणेश्वरः ॥
त्वां तु काञ्चनवर्णाभां दृष्ट्वा कौशेयवासिनीम् ।
रतिं स्वकेषु दारेषु नाधिगच्छाम्यनिन्दिते ॥
बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः ।
सर्वासामेव भद्रं ते ममाग्रमहिषी भव ॥
रावणेनैवमुक्ता तु कुपिता जनकात्मजा ।
प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ॥
महाबाहुं महोरस्कं सिंहविक्रान्तगामिनम् ।
नृसिंहं सिंहसंकाशमहं राममनुव्रता ॥

त्वं पुनर्जम्बुकः सिंही मामिहेच्छसि दुर्लभाम् ।
नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा ॥
यदन्तरं सिंहशृगालयोर्वने यदन्तरं चन्दनवारिपङ्कयोः ।
यदन्तरं हस्तिबिडालयोर्वने तदन्तरं दाशरथेस्तवैव च ॥
तस्मिन्सहस्राक्षसमप्रभावे रामे स्थिते कार्मुकबाणपाणौ ।
हृतापि तेऽहं न जरां गमिष्ये आज्यं यथा मक्षिकयावगीर्णम् ॥
एवं ब्रुवत्यां सीतायां संरब्धः परुषं वचः ।
हस्ते हस्तं समाहन्य चकार सुमहद्वपुः ॥
स मैथिलीं पुनर्वाक्यं बभाषे वाक्यकोविदः ।
नोन्मत्तया श्रुतौ मन्ये मम वीर्यपराक्रमौ ॥
उद्वहेयं भुजाभ्यां तु मेदिनीमम्बरे स्थितः ।
आपिबेयं समुद्रं च मृत्युं हन्यां रणे स्थितः ॥
अर्कं तुद्यां शरैस्तीक्ष्णैर्विभिन्द्यां हि महीतलम् ।
कामरूपेण उन्मत्ते पश्य मां कामरूपिणम् ॥
स परिव्राजकच्छद्म महाकायो विहाय तत् ।
प्रतिपेदे स्वकं रूपं रावणो राक्षसाधिपः ॥
अभिगम्य सुदुष्टात्मा राक्षसः काममोहितः ।
जग्राह रावणः सीतां बुधः खे रोहिणीमिव ॥
वामेन सीतां पद्माक्षीं मूर्धजेषु करेण सः ।
ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना ॥
तं दृष्ट्वा गिरिशृङ्गाभं तीक्ष्णदंष्ट्रं महाभुजम् ।
प्राद्रवन्मृत्युसंकाशं भयार्ता वनदेवताः ॥

ततस्तां परुषैर्वाक्यैरभितर्ज्य महास्वन ।
अङ्कनादाय वैदेहीं रथमारोहयत्तदा ॥
सा गृहीतातिचुक्रोश रावणेन यशस्विनी ।
रामेति सीता दु.खार्ता रामं दूरं गतं वने ॥
तामकामां स कामार्त पन्नगेन्द्रवधूमिव ।
विचेष्टमानामादाय उत्पपाताथ रावण. ॥
तत सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ।
भृश चुक्रोश मत्तेव भ्रान्तचित्ता यथातुरा ॥
हा लक्ष्मण महाबाहो गुरुचित्तप्रसादक ।
ह्रियमाणां न जानीषे रक्षसा कामरूपिणा ॥
आमन्त्रये जनस्थानं कर्णिकारांश्च पुष्पितान् ।
क्षिप्र रामाय शंसध्वं सीतां हरति रावण ॥
हंसस्मारससंघुष्टां वन्दे गोदावरीं नदीम् ।
क्षिप्रं रामाय शंसध्वं सीतां हरति रावण ॥
दैवतानि च यान्यस्मिन्वने विविधपादपे ।
नमस्करोम्यहं तेभ्यो भर्तुः शसत मां हृताम् ॥
यानि कानिचिदप्यत्र सत्त्वानि विविधानि च ।
सर्वाणि शरणं यामि मृगपक्षिगणानि वै ॥
ह्रियमाणां प्रियां भर्तु॰ प्राणेभ्योऽपि गरीयसीम् ।
विवशा ते हृता सीता रावणेनेति शंसत ॥
सा तदा करुणावाचो विलपन्ती सुदु.खिता ।
वनस्पतिगतं गृध्रं ददर्शायतलोचना ।

सा तमुद्वीक्ष्य सुश्रोणी रावणस्य वशंगता ॥
समाक्रन्दद्भयपरा दुःखोपहितया गिरा ।
जटायो पश्य मामार्य ह्रियमाणामनाथवत् ।
अनेन राक्षसेन्द्रेण करुणं पापकर्मणा ॥
ततः पर्वतशृङ्गाभस्तीक्ष्णतुण्डः खगोत्तमः ।
वनस्पतिगतः श्रीमान्व्याजहार शुभां गिरम् ॥
दशग्रीव स्थितो धर्मे पुराणे सत्यसंश्रवः ।
भ्रातस्त्वं निन्दितं कर्म कर्तुं नार्हसि सांप्रतम् ॥
न तत्समाचरेद्धीरो यत्परोऽस्य विगर्हयेत् ।
यथात्मनस्तथान्येषां दारा रक्ष्या विमर्शनात् ॥
वृद्धोऽहं त्वं युवा धन्वी सरथः कवची शरी ।
न चाप्यादाय कुशली वैदेहीं मे गमिष्यसि ॥
इत्युक्तः क्रोधताम्राक्षस्तप्तकाञ्चनकुण्डलः ।
राक्षसेन्द्रोऽभिदुद्राव पतगेन्द्रममर्षणः ॥
ततो मुहूर्तं सङ्ग्रामो बभूवातुलवीर्ययोः ।
राक्षसानां च मुख्यस्य पक्षिणां प्रवरस्य च ॥
स च्छिन्नपक्षः सहसा रक्षसा रौद्रकर्मणा ।
निपपात महागृध्रो धरण्यामल्पजीवितः ॥
सा तु ताराधिपमुखी रावणेन निरीक्ष्य तम् ।
गृध्रराजं विनिहतं विललाप सुदुःखिता ॥
ह्रियमाणा तु वैदेही कंचिन्नाथमपश्यती ।
ददर्श गिरिशृङ्गस्थान्पञ्चवानरपुंगवान् ॥

तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम् ।
उत्तरीयं वरारोहा शुभान्याभरणानि च ॥
मुमोच यदि रामाय शंसेयुरिति भामिनी ।
वस्त्रमुत्सृज्य तन्मध्ये निक्षिप्तं सहभूषणम् ॥
संभ्रमात्तु दशग्रीवस्तत्कर्म च न बुद्धवान् ।
विक्रोशन्तीं तदा सीतां ददृशुर्वानरोत्तमाः ।
स च पम्पामतिक्रम्य लङ्कामभिमुखः पुरीम् ॥
जगाम मैथिलीं गृह्य रुदतीं राक्षसेश्वरः ।
तां तु शोकवशाद्दीनामवशां राक्षसाधिपः ॥
उवाच वचनं वीरो रावणो रजनीचरः ।
एतौ पादौ मया स्निग्धौ शिरोभिः परिपीडितौ ॥
प्रसादं कुरु मे क्षिप्रं वश्योदासोऽहमस्मि ते ।
सा तथोक्ता तु वैदेही निर्भया शोककर्षिता ।
तृणमन्तरतः कृत्वा रावणं प्रत्यभाषत ॥
यदा विनाशो भूतानां दृश्यते कालचोदितः ।
तदा कार्ये प्रमाद्यन्ति नराः कालवशं गताः ॥
मां प्रधृष्य स ते कालः प्राप्तोऽयं राक्षसाधम ।
आत्मनो राक्षसानां च वधायान्तःपुरस्य च ॥
न शक्या यज्ञमध्यस्था वेदिः स्रुग्भाण्डमण्डिता ।
द्विजातिमन्त्रसंपूता चण्डालेनावमर्दितुम् ॥
क्रीडन्ती राजहंसेन पद्मषण्डेषु नित्यशः ।
हंसी सा तृणमध्यस्थं कथं द्रक्ष्येत मद्गुकम् ॥

इदं शरीरं नि:संज्ञं बन्ध वा घातयस्व वा ।
नेदं शरीरं रक्ष्यं मे जीवित वापि राक्षस ॥
न तु शक्यमपक्रोशं पृथिव्यां दातुमात्मनः ।
एवमुक्त्वा तु वैदेही क्रोधात्सुपरुषं वचः ॥
रावणं जानकी तत्र पुनर्नोवाच किञ्चन ।
सीताया वचनं श्रुत्वा परुषं रोमहर्षणम् ।
प्रत्युवाच ततः सीतां भयसंदर्शनं वचः ॥
शृणु मैथिलि मद्वाक्यं मासान्द्वादश भामिनि ॥
कालेनानेन नाभ्येषि यदि मां चारुहासिनि ।
ततस्त्वां प्रातराशार्थं सूदाश्छेत्स्यन्ति लेशशः ॥
इत्युक्त्वा परुषं वाक्यं रावणः शत्रुरावणः ।
राक्षसीश्च ततः क्रुद्ध इद वचनमब्रवीत् ॥
अशोकवनिकामध्यं मैथिली नीयतामिति ।
तत्रेयं रक्ष्यतां गूढं युष्माभिः परिवारिता ॥
न विन्दते तत्र तु शर्म मैथिली विरूपनेत्राभिरतीव तर्जिता ।
पतिं स्मरन्ती दयितं च देवरं विचेतनाभूद्भयशोकपीडिता ॥
राक्षसं मृगरूपेण चरन्तं कामरूपिणम् ।
निहत्य रामो मारीचं तूर्णं पथि न्यवर्तत ॥
तस्य संत्वरमाणस्य द्रष्टुकामस्य मैथिलीम् ।
क्रूरस्वनोऽथ गोमायुर्विननादास्य पृष्ठतः ॥
स दृष्ट्वा लक्ष्मणं दीनं शून्यं दशरथात्मजः ।
पर्यपृच्छत धर्मात्मा वैदेहीमागतं विना ॥

एवमुक्तस्तु सौमित्रिर्लक्ष्मणः शुभलक्षणः ।
भूयो दुःखसमाविष्टो दुःखितं राममब्रवीत् ॥
न स्वयं कामकारेण तां त्यक्त्वाहमिहागतः ।
प्रचोदितस्तयैवोग्रैस्त्वत्सकाशमिहागतः ॥
सा तमार्तस्वरं श्रुत्वा तव स्नेहेन मैथिली ।
गच्छ गच्छेति मामाशु रुदती भयविक्लवा ॥
प्रचोद्यमानेन मया गच्छेति बहुशस्तया ।
प्रत्युक्ता मैथिली वाक्यमिदं तत्प्रत्ययान्वितम् ॥
अलं विक्लवतां गन्तुं स्वस्था भव निरुत्सुका ।
न चास्ति त्रिषु लोकेषु पुमान्यो राघवं रणे ॥
जातो वा जायमानो वा संयुगे यः पराजयेत् ।
एवमुक्ता तु वैदेही परिमोहितचेतना ।
उवाचाश्रूणि मुञ्चन्ती दारुणं मामिदं वचः ॥
भावो मयि तवात्यर्थं पाप एव निवेशितः ।
विनष्टे भ्रातरि प्राप्तुं न च त्वं मामवाप्स्यसे ॥
संकेताद्भरतेन त्वं रामं समनुगच्छसि ।
क्रोशन्तं हि यथात्यर्थं नैनमभ्यवपद्यसे ॥
रिपुः प्रच्छन्नचारी त्वं मदर्थमनुगच्छसि ।
राघवस्यान्तरं प्रेप्सुस्तथैनं नाभिपद्यसे ॥
एवमुक्तस्तु वैदेह्या संरब्धो रक्तलोचनः ।
क्रोधात्प्रस्फुरमाणोष्ठ आश्रमादभिनिर्गतः ॥
एवं ब्रुवाणं सौमित्रिं रामः संतापमोहितः ।

अब्रवीदुष्कृतं सौम्य तां विना त्वमिहागतः ॥
असौ हि राक्षसः शेते शरेणाभिहतोमया ।
मृगरूपेण येनाहमाश्रमादपवाहितः ॥
त्वरमाणो जगामाथ सीतादर्शनलालसः ।
शून्यमावसथं दृष्ट्वा बभूवोद्विग्नमानसः ॥
ददर्श पर्णशालां च सीतया रहितां तदा ।
श्रिया विरहितां ध्वस्तां हेमन्ते पद्मिनीमिव ॥
तदा स गत्वा विपुलं महद्वनं परीत्य सर्वं त्वथ मैथिलीं प्रति ।
अनिश्चिताशः स चकार मार्गणे पुनः प्रियायाः परमं परिश्रमम् ॥
दृष्ट्वाश्रमपदं शून्यं रामो दशरथात्मजः ।
अदृष्ट्वा तत्रवैदेही संनिरीक्ष्य च सर्वशः ॥
स राजपुत्रः प्रियया विहीनः शोकेन मोहेन च पीड्यमानः ।
विषादयन्भ्रातरमार्तरूपो भूयो विषादं प्रविवेश तीव्रम् ॥
स लक्ष्मणं शोकवशाभिपन्नं शोके निमग्नो विपुले तु रामः ।
उवाच वाक्यं व्यसनानुरूपमुष्णं विनिःश्वस्य रुदन्सशोकम् ॥
राज्यप्रणाशः स्वजनैर्वियोगः पितुर्विनाशो जननीवियोगः ।
सर्वाणि मे लक्ष्मण शोकवेगमापूरयन्ति प्रविचिन्तितानि ॥
सर्वं तु दुःखं मम लक्ष्मणेदं शान्तं शरीरे वनमेत्य क्लेशम् ।
सीता वियोगात्पुनरभ्युदीर्णं काष्ठैरिवाग्निः सहसोपदीप्तः ॥
नूनं विनादं कुररीव दीना सा मुक्तवत्यायतकान्तनेत्रा ॥
कामं त्विदं पुष्पितवृक्षषण्डं नानाविधैः पक्षिगणैरुपेतम् ।
वनं प्रयाता नु तदप्ययुक्तमेकाकिनी सातिबिभेति भीरुः ॥

आदित्य भो लोककृताकृतज्ञ लोकस्य सत्यानृतकर्मसाक्षिन् ।
मम प्रिया सा क्व गता हृता वा शंसस्व मे शोकहतस्य सर्वम् ॥
लोकेषु सर्वेषु न नास्ति किंचिद्यत्तेन नित्य विदितं भवेत्तत् ।
शंसस्व वायो कुलपालिनीं तां मृता हृता वा पथि वर्तते वा ॥
इतीव तं शोकविधेयदेह रामं विसंज्ञं विलपन्तमेव ।
उवाच सौमित्रिरदीनसत्त्वो न्याय्ये स्थित: कालयुतं च वाक्यम् ॥
शोकं विसृज्याद्य धृतिं भजस्व सोत्साहता चास्तु विमार्गणेऽस्याः ।
उत्साहवन्तो हि नरा न लोके सीदन्ति कर्मस्वतिदुष्करेषु ॥
इतीव सौमित्रिमुदग्रपौरुष ब्रुवन्तमार्त रघुवंशसत्तम: ।
न चिन्तयामास धृतिं विमुक्तवान्पुनश्च दु:खं महदप्युपागमत् ॥

* राक्षसेनानुसृप्ताया वैदेह्याश्च पदानि तु ।
स समीक्ष्य परिक्रान्तं सीताया राक्षसस्य च ॥
भग्नं धनुश्च तूर्णी च विकीर्णं बहुधा रथम् ।
संभ्रान्तहृदयो रामः शशंस भ्रातरं प्रियम् ॥
मन्ये लक्ष्मण वैदेही राक्षसैः कामरूपिभिः ।
भित्त्वा भित्त्वा विभक्ता वा भक्षिता वा भविष्यति ॥
मृदुं लोकहितं युक्तं दान्त करुणवेदिनम् ।
निर्वीर्य इति मन्यन्ते नूनं मां त्रिदशेश्वरा. ॥
तप्यमानं तदा रामं सीताहरणकर्शितम् ।
वीक्षमाणं धनुः सज्यं निःश्वसन्तं पुनः पुनः ॥
अदृष्टपूर्वं संक्रुद्धं दृष्ट्वा रामं स लक्ष्मणः ।
अब्रवीत्प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ॥

पुरा भूत्वा मृदुर्दान्त' सर्वभूतहिते रतः ।
न क्रोधवशमापन्न. प्रकृतिं हातुमर्हसि ॥
चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा ।
एतच्च नियतं नित्यं त्वयि चानुत्तम यशः ॥
समुद्र वा विचेष्यामं' पर्वताश्च वनानि च ।
गुहाश्च विविधा घोराः पद्मिन्यो विविधास्तथा ॥
देवगन्धर्वलोकांश्च विचेष्याम. समाहिताः ।
यावन्नाधिगमिष्यामस्तव भार्यापहारिणम् ॥
न चेत्साम्ना प्रदास्यन्ति पत्नीं ते त्रिदशेश्वरा ।
कोशलेन्द्र तत' पश्चात्प्राप्तकाल करिष्यसि ॥
शीलेन साम्ना विनयेन सीतां नयेन न प्राप्स्यसि चेन्नरेन्द्र ।
ततः समुत्सादय हेमपुङ्खैर्महेन्द्रवज्रप्रतिमै. शरौघै' ॥
तं तथा शोकसंतप्तं विलपन्तमनाथवत् ।
मोहेन महता युक्तं परिद्यूनमचेतसम् ॥
तत. सौमित्रिराश्वास्य मुहूर्तादिव लक्ष्मणः ।
राम संबोधयामास चरणौ चाभिपीडयन् ॥
यदि दु'खमिदं प्राप्तं काकुत्स्थ न सहिष्यसे ।
प्राकृतश्चाल्पसत्त्वश्च इतर' कः सहिष्यति ॥
आश्वसिहि नरश्रेष्ठ प्राणिन कस्य नापद. ।
संस्पृशन्त्यग्निवद्राजन्क्षणेन व्यपयान्ति च ॥
शक्रादिष्वपि देवेषु वर्तमानौ नयानयौ ।
श्रूयेते नरशार्दूल न त्वं व्यथितुमर्हसि ॥

मृतायामपि वैदेह्यां नष्टायामपि राघव ।
शोचितुं नार्हसे वीर यथान्य. प्राकृतस्तथा ॥
त्वद्विधा नहि शोचन्ति सततं सर्वदर्शना. ।
सुमहत्स्वपि कृच्छ्रेषु रामानिर्विण्णदर्शना. ॥
पूर्वजोऽप्युक्तवाक्यस्तु लक्ष्मणेन सुभाषितम् ।
सारग्राही महासारं प्रतिजग्राह राघवः ॥
स निगृह्य महाबाहु प्रवृद्ध रोषमात्मनः ।
अवष्टभ्य धनुश्चित्रं रामो लक्ष्मणमब्रवीत् ॥
किं करिष्यावहे वत्स क वा गच्छाव लक्ष्मण ।
केनोपायेन पश्याव सीतामिह विचिन्तय ॥
तं तथा परितापार्त लक्ष्मणो वाक्यमब्रवीत् ।
इदमेव जनस्थानं त्वमन्वेषितुमर्हसि ॥
राक्षसैर्बहुभिः कीर्ण नानाद्रुमलतायुतम् ।
सन्तीह गिरिदुर्गाणि निर्दराः कंदराणि च ॥
तानि युक्तो मया सार्धं समन्वेषितुमर्हसि ।
ततः पर्वतकूटाभं महाभागं द्विजोत्तमम् ॥
ददर्श पतितं भूमौ क्षतजार्द्र जटायुषम् ।
तं दृष्ट्वा गिरिशृङ्गाभं रामो लक्ष्मणमब्रवीत् ॥
तं दीनदीनया वाचा सफेनं रुधिरं वमन् ।
अभ्यभाषत पक्षी स रामं दशरथात्मजम् ॥
यामोषधीमिवायुष्मन्नन्वेषसि महावने ।
सा देवी मम च प्राणा रावणेनोभयं हृतम् ॥

रामस्तस्य तु विज्ञाय सीतासक्तां प्रियां कथाम् ।
गृध्रराजं परिष्वज्य परित्यज्य महद्धनु. ॥
राज्यं भ्रष्टं वने वासः सीता नष्टा मृतो द्विजः ।
ईदृशीयं ममालक्ष्मीर्दहेदपि हि पावकम् ॥
इत्येवमुक्त्वा बहुशो राघव' सहलक्ष्मण ।
जटायुषञ्च पस्पर्श पितृस्नेहं निदर्शयन् ॥
रामप्रेक्ष्य तु त गृध्रं भुवि रौद्रेण पातितम् ।
सौमित्रिं मित्रसम्पन्नमिदं वचनमब्रवीत् ॥
ममायं नूनमर्थेषु यतमानो' विहंगम. ।
राक्षसेन हत. सख्ये प्राणांस्त्यजति मत्कृते ॥
ततो गोदावरीं गत्वा नदीं नरवरात्मजौ ।
उदकं चक्रतुस्तस्मै गृध्रराजाय तावुभौ ॥
तौ पुष्करिण्या पम्पायास्तीरमासाद्य पश्चिमम् ।
अपश्यतां ततस्तत्र शबर्या रम्यमाश्रमम् ॥
तौ दृष्ट्वा तु तदासिद्धा समुत्थाय कृताञ्जलि. ।
पाद्यमाचमनीयञ्च सर्वं प्रादाद् यथाविधि ॥
अनुज्ञाता तु रामेण हुत्वात्मानं हुताशने ।
ज्वलत्पावकसंकाशा स्वर्गमेव जगाम ह ॥
दिवं तु तस्यां यातायां शबर्यां स्वेन तेजसा ।
आजगाम तत. पम्पां लक्ष्मणेन सह प्रभुः ॥
स तां पुष्करिणीं गत्वा पद्मोत्पलझषाकुलाम् ।
रामः सौमित्रिसहितो विललापाकुलेन्द्रियः ॥

सोऽभ्यतिक्रामदव्यग्रस्तामचिन्त्यपराक्रमः ।
रामः पम्पा सुरुचिरां रम्यां पारिप्लवद्रुमाम् ॥
तावृष्यमूकस्य समीपचारी परन्ददर्शाद्भुतदर्शनीयौ ।
शाखामृगाणामधिपस्तरस्वी वितत्रसे नैव विचेष्ट चेष्टम् ।
ततः स सचिवेभ्यस्तु सुग्रीवः प्लवगाधिपः ।
शशंस परमोद्विग्नः पश्यंस्तौ रामलक्ष्मणौ ॥
एतौ वनमिदं दुर्गं वालिप्रणिहितौ ध्रुवम् ।
छद्मना चीरवसनौ प्रचरन्ताविहागतौ ॥
ततस्तु भयसंत्रस्तं वालिकिल्बिषशङ्कितम् ।
उवाच हनुमान्वाक्यं सुग्रीवं वाक्यकोविदः ॥
संभ्रमस्त्यज्यतामेष सर्वैर्वालिकृते महान् ।
मलयोऽयं गिरिवरो भयं नेहास्ति वालिनः ॥
सुग्रीवस्तु शुभं वाक्यं श्रुत्वा सर्वं हनूमतः ।
ततः शुभतरं वाक्यं हनूमन्तमुवाच ह ॥
वालिप्रणिहितावेव शङ्केऽहं पुरुषोत्तमौ ।
तौ त्वया प्राकृतेनेव गत्वा ज्ञेयौ प्लवंगम ॥
व्याभाषितैर्वा रूपैर्वा विज्ञेया दुष्टतानयोः ॥
तथेति संपूज्य वचस्तु तस्य कपिः सुभीतस्य दुरासदस्य ।
महानुभावो हनुमान्ययौ तदा स यत्र रामोऽतिबली सलक्ष्मणः ॥
ततश्च हनुमान्वाचा श्लक्ष्णया सुमनोज्ञया ।
उवाच कामतो वाक्यं मृदु सत्यपराक्रमौ ॥
देशं कथमिमं प्राप्तौ भवन्तौ वरवर्णिनौ ।

धैर्यवन्तौ सुवर्णाभौ कौ युवां चीरवाससौ ॥
एवं मां परिभाषन्त कस्माद्वै नाभिभाषथ. ॥
सुग्रीवो नाम धर्मात्मा कश्चिद्वानरपुंगवः ।
वीरो विनिकृतो भ्रात्रा जगद्भ्रमति दुःखितः ॥
प्राप्तोऽहं प्रेषितस्तेन सुग्रीवेण महात्मना ।
राज्ञा वानरमुख्यानां हनुमान्नाम वानर· ॥
युवाभ्यां स हि धर्मात्मा सुग्रीवः सख्यमिच्छति ।
तस्य मां सचिवं वित्तं वानरं पवनात्मजम् ॥
एवमुक्तस्तु सौमित्रिः सुग्रीवसचिवं कपिम ।
अभ्यभाषत वाक्यज्ञो वाक्यज्ञं पवनात्मजम् ॥
विदिता नौ गुणा विद्वन्सुग्रीवस्य महात्मन· ।
तमेव चावां मार्गाव· सुग्रीवं प्लवगेश्वरम् ॥
यथा ब्रवीषि हनुमन्सुग्रीववचनादिह ।
तत्तथा हि करिष्यावो वचनात्तव सत्तम ॥

स तु विपुलयशाः कपिप्रवीरः पवनसुतः कृतकृत्यवत्प्रहृष्टः ।
गिरिवरमुरुविक्रमः प्रयातः स शुभमतिः सह रामलक्ष्मणाभ्याम् ॥

ऋष्यमूकात्तु हनुमान्गत्वा तं मलय गिरिम् ।
आचचक्षे तदा वीरौ कपिराजाय राघवौ ॥
भवता सख्यकामौ तौ भ्रातरौ रामलक्ष्मणौ ।
प्रगृह्य चार्चयस्वैतौ पूजनीयतमावुभौ ॥
श्रुत्वा हनूमतो वाक्यं सुग्रीवो वानराधिपः ।
दर्शनीयतमो भूत्वा प्रीत्योवाच च राघवम् ॥

रोचते यदि मे सख्यं बाहुरेष प्रसारित. ।
गृह्यता पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा ॥
एतत्तु वचनं श्रुत्वा सुग्रीवस्य सुभाषितम् ।
सम्प्रहृष्टमना हस्त पीडयामास पाणिना ॥
ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम् ।
सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ॥
तत. प्रहृष्ट सुग्रीव· श्लक्ष्णं मधुरया गिरा ॥
प्रत्युवाच तदा रामं हर्षव्याकुललोचन· ।
अहं विनिकृतो राम चरामिह भयार्दित· ॥
हृतभार्यो वने त्रस्तो दुर्गमेतदुपाश्रित: ।
सोऽहं त्रस्तो वने भीतो वसाम्युद्भ्रान्तचेतन. ॥
वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ।
वालिनो मे महाभाग भयार्तस्याभयं कुरु ॥
एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सल: ॥
प्रत्यभाषत काकुत्स्थ: सुग्रीवं प्रहसन्निव ।
वालिनं तं वधिष्यामि तव भार्यापहारिणम् ॥
स तु तद्वचनं श्रुत्वा राघवस्यात्मनो हितम् ।
सुग्रीव: परमप्रीत: परमं वाक्यमब्रवीत् ॥
अयमाख्याति ते राम सेवको मन्त्रिसत्तम: ।
रक्षसापहृता भार्या मैथिली जनकात्मजा ॥
अनुमानात्तु जानामि मैथिली सा न संशय: ।
ह्रियमाणा मया दृष्टा रक्षसा रौद्रकर्मणा ॥

क्रोशन्ती रामरामेति लक्ष्मणेति च विस्वरम् ।
स्फुरन्ती रावणस्याङ्के पन्नगेन्द्रवधूर्यथा ॥
आत्मना पञ्चमं मां हि दृष्ट्वा शैलतले स्थितम् ।
उत्तरीयं तया त्यक्तं शुभान्याभरणानि च ॥
तान्यस्माभिर्गृहीतानि निहितानि च राघव ।
आनयिष्याम्यहं तानि प्रत्यभिज्ञातुमर्हसि ॥
उत्तरीयं गृहीत्वा तु स तान्याभरणानि च ।
इदं पश्येति रामाय दर्शयामास वानरः ॥
ततो गृहीत्वा वासस्तु शुभान्याभरणानि च ।
अभवद्बाष्पसंरुद्धो नीहारेणेव चन्द्रमाः ॥
पश्य लक्ष्मण वैदेह्या संत्यक्तं ह्रियमाणया ।
उत्तरीयमिदं भूमौ शरीराद्भूषणानि च ॥
एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् ।
नाहं जानामि केयूरे नाहं जानामि कुण्डले ॥
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात् ।
ततस्तु राघवो वाक्यं सुग्रीवमिदमब्रवीत् ॥
ब्रूहि सुग्रीव कं देशं ह्रियन्ती लक्षिता त्वया ।
क्व वा वसति तद्रक्षो महद्व्यसनदं मम ॥
एवमुक्तस्तु सुग्रीवो रामेणार्तेन वानरः ।
अब्रवीत्प्राञ्जलिर्वाक्यं सबाष्पं बाष्पगद्गदः ॥
सत्यं तु प्रतिजानामि त्यज शोकमरिन्दम ।
करिष्यामि तथा यत्नं यथा प्राप्स्यसि मैथिलीम् ॥

विनिःश्वस्य च तेजस्वी राघव पुनरूचिवान् ।
अभिषिक्तं तु मा दृष्ट्वा क्रोधात्संरक्तलोचन. ॥
मदीयान्मन्त्रिणो बद्ध्वा परुषं वाक्यमब्रवीत् ।
नत्वा पादावहं तस्य मुकुटेनास्पृश प्रभो ॥
अपि वाली मम क्रोधान्न प्रसाद चकार सः ।
तेनाहमपविद्धश्च हृतदारश्च राघव ॥
अनागसा मया प्राप्त व्यसनं पश्य राघव ।
वालिनश्च भयात्तस्य सर्वलोकभयापह ॥
कर्तुमर्हसि मे वीर प्रसाद तस्य निग्रहात् ।
एवमुक्तः स तेजस्वी धर्मज्ञो धर्मसहितम् ।
वचनं वक्तुमारेभे सुग्रीव प्रहसन्निव ॥
यावत्तं नहि पश्येयं तव भार्यापहारिणम् ।
तावत्स जीवेत्पापात्मा वाली चारित्रदूषकः ॥
रामस्य वचनं श्रुत्वा हर्षपौरुषवर्धनम् ।
सुग्रीवः पूजयांचक्रे राघवं प्रशशंस च ॥
ऋष्यमूकात्स धर्मात्मा किष्किन्धां लक्ष्मणाग्रजः ।
जगाम सह सुग्रीवो वालिविक्रमपालिताम् ॥
सुग्रीवो विपुलग्रीवः क्रोधमाहारयद्भृशम् ।
ततस्तु निनदं घोरं कृत्वा युद्धाय चाह्वयत् ॥
शब्दं दुर्मर्षणं श्रुत्वा निष्पपात ततो हरिः ।
वेगेन च पदन्यासैर्दारयन्निव मेदिनीम् ॥
तं तु तारा परिष्वज्य स्नेहाद्दर्शितसौहृदा ।

उवाच त्रस्तसंभ्रान्ता हितोदर्कमिदं वचः ॥
साधुक्रोधमिमं वीर नदीवेगमिवागतम् ।
शयनादुत्थितकाल्यं त्यज भुक्तामिव स्रजम् ॥
अयोध्याधिपतेः पुत्रौ शूरौ समरदुर्जयौ ।
सुग्रीव प्रियकामार्थं प्राप्तौ तत्र दुरासदौ ॥
स ते भ्रातुर्हि विख्यातः सहायो रणकर्म्मणि ।
रामः परबलामर्दी युगान्ताग्निरिवोत्थितः ॥
प्रसाद पथ्यं शृणु जल्पितं हि मे न रोषमेवानुविधातुमर्हसि ।
क्षमो हि ते कोशलाराजसूनुना न विग्रहः शक्रसमानतेजसा ॥
तामेवं ब्रुवतीं तारां ताराधिपनिभाननाम् ।
वाली निर्भर्त्सयामास वचनं चेदमब्रवीत् ॥
गर्जतोऽस्य सुसंरब्धं भ्रातुः शत्रोर्विशेषतः ।
मर्षयिष्यामि केनापि कारणेन वरानने ॥
स ददर्श ततः श्रीमान्सुग्रीवं हेमपिङ्गलम् ।
सुसंवीतमवष्टब्ध दीप्यमानमिवानलम् ॥
मुष्टिभिर्जानुभिः पद्भिर्बाहुभिश्च पुनः पुनः ।
तयोर्युद्धमभूद्धोरं वृत्रवासवयोरिव ॥
हीयमानमथापश्यत्सुग्रीवं वानरेश्वरम् ।
प्रेक्षमाणं दिशश्चैव राघवः स मुहुर्मुहुः ॥
ततो धनुषि संधाय शरमाशीविषोपमम् ।
पूरयामास तच्चापं कालचक्रमिवान्तकः ॥
मुक्तस्तु वज्रनिर्घोषः प्रदीप्ताशनिसंनिभः ।

राघवेण महाबाणा वालिवक्षसि पातित. ॥
ततस्तेन महातेजा वीर्ययुक्तः कपीश्वर॰ ।
वेगेनाभिहतो वाली निपपात महीतले ॥
त तथा पतितं वीरं गतार्चिषमिवानलम् ।
उपयातौ महावीर्यौ भ्रातरौ रामलक्ष्मणौ ॥
तं दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम् ।
अब्रवीत्परुषं वाक्यं प्रश्रितं धर्मसंहितम् ॥
पराङ्मुखवधं कृत्वा कोऽत्र प्राप्तस्त्वया गुणः ।
यदहं युद्धसंरब्धस्त्वत्कृते निधनं गत ॥
हत्वा बाणेन काकुत्स्थ मामिहानपराधिनम् ।
किं वक्ष्यसि सतां मध्ये कर्म कृत्वा जुगुप्सितम् ॥
उदासीनेषु योऽस्मासु विक्रमोऽय प्रकाशितः ।
अपकारिषु ते राम नैवं पश्यामि विक्रमम् ॥
दृश्यमानस्तु युध्येथा मया युधि नृपात्मज ।
अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया ॥
सुग्रीवप्रियकामेन यदहं निहतस्त्वया ।
मामेव यदि पूर्वं त्वमेतदर्थमचोदयः ॥
मैथिलीमहमेकाह्ना तव चानीतवान्भवेः ।
राक्षसं च दुरात्मानं तव भार्यापहारिणम् ।
कण्ठे बद्ध्वा प्रदद्यां तेऽनिहतं रावणं रणे ॥
युक्तं यत्प्राप्नुयाद्राज्यं सुग्रीवः स्वर्गते मयि ॥
अयुक्तं यदधर्मेण त्वयाहं निहतो रणे ।

अधिक्षिप्तस्तदा रामः पश्चाद्वालिनमब्रवीत् ॥
अविज्ञाय कथं बाल्यान्मामिहाद्य विगर्हसे ।
औरसीं भगिनीं वापि भार्यां वाप्यनुजस्य यः ॥
प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः ।
भरतस्तु महीपालो वयं त्वादेशवर्तिन ॥
भरतः कामयुक्तानां निग्रहे पर्यवस्थितः ।
वयं तु भरतादेशावधिं कृत्वा हरीश्वर ॥
त्वद्विधान्भिन्नमर्यादान्निग्रहीतुं व्यवस्थिताः ।
तस्मात्त्वं निहतो युद्धे मया बाणेन वानर ॥
एवमुक्तस्तु रामेण वाली प्रव्यथितो भृशम् ।
न दोषं राघवे दध्यौ धर्मेऽधिगतनिश्चय. ॥
प्रत्युवाच ततो रामं प्राञ्जलिर्वानरेश्वरः ।
यत्त्वमात्थ नरश्रेष्ठ तत्तथैव न संशयः ॥
स तमाश्वासयद्रामो वालिनं व्यक्तदर्शनम् ।
साधुसंमतया वाचा धर्मतत्त्वार्थयुक्तया ॥
तं भार्या बाणमोक्षेण रामदत्तेन संयुगे ।
हतं प्लवगशार्दूलं तारा शुश्राव वालिनम् ॥
वानरं पर्वतेन्द्राभं शोकसंतप्तमानसा ।
तारा तरुमिवोन्मूलं पर्यदेवयतातुरा ॥
ततोनिपतितां तारां च्युतां तारामिवाम्बरात् ।
शनैराश्वासयामास हनुमान्हरियूथपः ॥
तं प्राप्तविजयं वाली सुग्रीवं प्लवगेश्वरम् ।

आभाष्य व्यक्तया वाचा सस्नेहमिदमब्रवीत् ॥
युगपद्विहित तात न मन्ये सुखमावयो ।
सौहार्द भ्रातृयुक्त हि तदिद जातमन्यथा ॥
प्रतिपद्य त्वमद्यैव राज्यमेषां वनौकसाम् ।
मामप्यद्यैव गच्छन्तं विद्धि वैवस्वतक्षयम् ॥
अस्यां त्वहमवस्थायां वीर वक्ष्यामि यद्वचः ।
यद्यप्यसुकर राजन्कर्तुमेव त्वमर्हसि ॥
सुखार्ह सुखसंवृद्ध बालमेनमबालिशम् ।
बाष्पपूर्णमुखं पश्य भूमौ पतितमङ्गदम् ॥
मम प्राणैः प्रियतर पुत्रं पुत्रमिवौरसम् ।
मया हीनमहीनार्थ सर्वत· परिपालय ॥
त्वमप्यस्य पिता दाता परित्राता च सर्वशः ।
भयेष्वभयदश्चैव यथाहं प्लवगेश्वर ॥
इत्युक्त्वाथ विवृत्ताक्ष. शरसंपीडितो भृशम् ।
विवृतैर्दशनैर्भीमैर्बभूवोत्क्रान्तजीवितः ॥
ततः समुपजिघ्रन्ती कपिराजस्य तन्मुखम् ।
पतिं लोकश्रुता तारा मृतं वचनमब्रवीत् ॥

न मे वचः पथ्यमिदं त्वया कृतं न चास्मि शक्ता हि निवारणे तव
हता सपुत्रास्मि हतेन संयुगे सह त्वया श्रीर्विजहाति मामपि
तामाशु वेगेन दुरासदेन त्वभिप्लुतां शोकमहार्णवेन ।
पश्यंस्तदा वाल्यनुजस्तरस्वीभ्रातुर्वधेनाप्रतिमेन तेपे ॥
स बाष्पपूर्णेन मुखेन पश्यन्क्षणेन निर्विण्णमना मनस्वी ।

यशस्विनं लक्षणलक्षिताङ्गमवस्थित राघवमित्युवाच ॥
यथा प्रतिज्ञातमिदं नरेन्द्र कृतं त्वया दृष्टफलं च कर्म ।
ममाद्य भोगेषु नरेन्द्रसूनो मनो निवृत्तं हतजीवितेन ॥
अस्यां महिष्यां तु भृश रुदत्यां पुरेऽतिविक्रोशति दुःखतप्ते ।
हते नृपे सशयितेऽङ्गदे च न राम राज्ये रमते मनो मे ॥
क्रोधादमर्षादतिविप्रधर्षाद्भ्रातुर्वधो मेऽनुमतः पुरस्तात् ।
हते त्विदानीं हरियूथपेऽस्मिन्सुतीक्ष्णमिक्ष्वाकुवर प्रतप्स्ये ॥
अद्याङ्गदो वीरवरो न जीवेज्जीवेत माता परिपालनार्थम् ।
विना तु पुत्रं परितापदीना सा नैव जीवेदिति निश्चितं मे ॥
सोऽहं प्रवेक्ष्याम्यतिदीप्तमग्निं भ्रात्रा च पुत्रेण च सख्यमिच्छन् ।
इमे विचेष्यन्ति हरिप्रवीरा सीतां निदेशे परिवर्तमानाः ॥
कृत्स्नं तु ते संत्स्यति कार्यमेतन्मय्यप्रयाते मनुजेन्द्रपुत्र ।
कुलस्य हन्तारमजीवनार्हं रामानुजानीहि कृतागसं माम् ॥

स सुग्रीवं च तारां च साङ्गदां सहलक्ष्मणः ।
समानशोकः काकुत्स्थः सान्त्वयन्निदमब्रवीत् ॥
एषा वै नियतिः श्रेष्ठा यां गतो हरियूथपः ।
तदलं परितापेन प्राप्तकालमुपास्यताम् ॥
वचनान्ते तु रामस्य लक्ष्मणः परवीरहा ।
अवदत्प्रश्रितं वाक्यं सुग्रीव गतचेतसम् ॥
कुरु त्वमस्य सुग्रीव प्रेतकार्यमनन्तरम् ।
ताराङ्गदाभ्यां सहितो वालिनो दहनं प्रति ॥
ततो वालिनमुद्यम्य सुग्रीवः शिबिकां तदा ।

आरोपयत विक्रोशन्नङ्गदेन सहैव तु ॥
आज्ञापयत्तदा राजा सुग्रीवः प्लवगेश्वरः ।
और्ध्वदेहिकमार्यस्य क्रियतामनुकूलतः ॥
विश्राणयन्तो रत्नानि विविधानि बहूनि च ।
अग्रतः प्लवगा यान्तु शिबिका तदनन्तरम् ॥
संस्कृत्यवालिनं तं तु विधिवत्प्लवगर्षभाः ।
आजग्मुरुदकं कर्तुं नदीं शुभजलां शिवाम् ॥
ततः कुशपरिस्तीर्णं समिद्धं जातवेदसम् ।
मन्त्रपूतेन हविषा हुत्वा मन्त्रविदो जनाः ॥
अभ्यषिञ्चत सुग्रीवं प्रसन्नेन सुगन्धिना ।
सलिलेन सहस्राक्षं वसवो वासवं यथा ॥
अभिषिक्ते तु सुग्रीवे सर्वे वानरपुंगवाः ।
प्रचुक्रुशुर्महात्मानो हृष्टाः शतसहस्रशः ॥
रामस्य तु वचः कुर्वन्सुग्रीवो वानरेश्वरः ।
अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत् ॥
अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहाम् ।
आजगाम सह भ्रात्रा रामः प्रश्रवणं गिरिम् ॥
वसन् माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत् ॥
अयं स कालः संप्राप्तः समयोऽद्य जलागमः ।
संपश्य त्वं नभो मेघैः संवृतंगिरिसन्निभैः ॥
क्वचित्प्रकाशं क्वचिदप्रकाशं नभः प्रकीर्णाम्बुधरंविभाति ।
क्वचित्क्वचित्पर्वतसंनिरुद्धं रूपं यथा शान्तमहार्णवस्य ॥

विद्युत्पताकाः सबलाकमाला. शैलेन्द्रकूटाकृतिसंनिकाशाः।
गर्जन्ति मेघाः समुदीर्णनादा मत्ता गजेन्द्रा इव संयुगस्थाः॥

वर्षोदकाप्यायितशाद्वलानि प्रवृत्तनृत्तोत्सवबर्हिणानि।
वनानि निर्वृष्टबलाहकानि पश्यापराह्णेष्वधिकं विभान्ति॥

समुद्वहन्तः सलिलातिभारं बलाकिनो वारिधरा नदन्तः।
महत्सु शृङ्गेषु महीधराणां विश्रम्य विश्रम्य पुनः प्रयान्ति॥

मेघाभिकामा परिसंपतन्ती संमोदिता भाति बलाकपङ्क्तिः।
वातावधूता वरपौण्डरीकी लम्बेव माला रुचिराम्बरस्य॥

वहन्ति वर्षन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति समाश्वसन्ति।
नद्यो घना मत्तगजा वनान्ताः प्रियाविहीना शिखिनः प्लवंगमाः॥

तडित्पताकाभिरलङ्कृतानामुदीर्णगम्भीरमहारवाणाम्।
विभान्ति रूपाणि बलाहकानां रणोत्सुकानामिव वानराणाम्॥

विलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः॥

नूनमापूर्यमाणायाः सरय्वा वर्धते रयः।
मां समीक्ष्य समायान्तमयोध्याया इव स्वनः॥

अहं तु हृतदारश्च राज्याच्च महतश्च्युतः।
नदीकूलमिव क्लिन्नमवसीदामि लक्ष्मण॥

समीक्ष्य विमलं व्योम गतविद्युद्बलाहकम्।
हरीश्वरमुपागम्य हनूमान्वाक्यमब्रवीत्।
राज्यं प्राप्तं यशश्चैव कौली श्रीरभिवर्धिता॥
मित्राणां संग्रहः शेषस्तद्भवान्कर्तुमर्हति।

यो हि मित्रेषु कालज्ञ सततं साधु वर्तते ॥
तस्य राज्यं च कीर्तिश्च प्रतापश्चापि वर्धते ।
तदिदं मित्रकार्यं न कालातीतमरिंदम ।
क्रियतां राघवस्यैतद्वैदेह्या परिमार्गणम् ॥
तस्य तद्वचनं श्रुत्वा काले साधु निरूपितम् ।
सुग्रीवः सत्त्वसंपन्नश्चकार मतिमुत्तमाम् ॥
संदिदेशातिमतिमान्नीलं नित्यकृतोद्यमम् ।
दिक्षु सर्वासु सर्वेषां सैन्यानामुपसंग्रहे ॥
अथ पद्मपलाशाक्षी मैथिलीमनुचिन्तयन् ।
उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥
घनानां वारणानां च मयूराणां च लक्ष्मण ।
नादः प्रस्रवणानां च प्रशान्तः सहसानघ ॥
शाखासु सप्तच्छदपादपानां प्रभासु तारार्कनिशाकराणाम् ।
लीलासु चैवोत्तमवारणानां श्रियं विभज्याद्य शरत्प्रवृत्ता ॥
संप्रत्यनेकाश्रयचित्रशोभा लक्ष्मीः शरत्कालगुणोपपन्ना ।
सूर्याग्रहस्तप्रतिबोधितेषु पद्माकरेष्वभ्यधिकं विभाति ॥
मदप्रगल्भेषु च वारणेषु गवां समूहेषु च दर्पितेषु ।
प्रसन्नतोयासु च निम्नगासु विभाति लक्ष्मीर्बहुधा विभक्ता ॥
नभः समीक्ष्याम्बुधरैर्विमुक्तं विमुक्तबर्हाभरणा वनेषु ।
प्रियास्वरक्ता विनिवृत्तशोभा गतोत्सवा ध्यानपरा मयूराः ॥
व्यक्तं नभः शस्त्रविधौतवर्णं कृशप्रवाहानि नदीजलानि ।
कह्लारशीताः पवनाः प्रवान्ति तमोविमुक्ताश्च दिशः प्रकाशाः ॥

व्यपेतपङ्कासु सवालुकासु प्रसन्नतोयासु सगोकुलासु ।
ससारसारावविनादितासु नदीषु हंसा निपतन्ति हृष्टाः ॥
रात्रिः शशाङ्कोदितसौम्यवक्त्रा तारागणोन्मीलितचारुनेत्रा ।
ज्योत्स्नांशुकप्रावरणा विभाति नारीव शुक्लांशुकसंवृताङ्गी ॥
प्रकीर्णहंसाकुलमेखलानां प्रबुद्धपद्मोत्पलमालिनीनाम् ।
वाप्युत्तमानामधिकाद्य लक्ष्मीर्वराङ्गनानामिव भूषितानाम् ॥
नवैर्नदीनां कुसुमप्रहासैर्व्याधूयमानैर्मृदुमारुतेन ।
धौतामलक्षौमपटप्रकाशैः कूलानि काशैरुपशोभितानि ॥
वनप्रचण्डा मधुपानशौण्डाः प्रियान्विताः षट्चरणाः प्रहृष्टाः ।
वनेषु मत्ताः पवनानुयात्रां कुर्वन्ति पद्मासनरेणुगौराः ॥
जलं प्रसन्नं कुसुमप्रहासं क्रौञ्चस्वनं शालिवनं विपक्वम् ।
मृदुश्च वायुर्विमलश्च चन्द्रः शंसन्ति वर्षव्यपनीतकालम् ॥
मीनोपसंदर्शितमेखलानां नदीवधूनां गतयोऽद्य मन्दाः ।

उद्योगसमयः सौम्य पार्थिवानामुपस्थितः ।
न च पश्यामि सुग्रीवमुद्योगं च तथाविधम् ॥
चत्वारो वार्षिका मासा गता वर्षशतोपमाः ।
मम शोकाभितप्तस्य तथा सीतामपश्यतः ॥
प्रियाविहीने दुःखार्ते हृतराज्ये विवासिते ।
कृपां न कुरुते राजा सुग्रीवो मयि लक्ष्मण ॥
स किष्किन्धां प्रविश्य त्वं ब्रूहि वानरपुंगवम् ।
मूर्खं ग्राम्यसुखे सक्तं सुग्रीवं वचनान्मम ॥
स निद्राक्लान्तसंवीतो वानरो न विबुद्धवान् ।

बभूव मदमत्तश्च मदनेन च मोहित. ॥
तत. शुभमतिः प्रज्ञो भ्रातु प्रियहिते रतः ।
लक्ष्मण' प्रतिसंरब्धो जगाम भवनं कपेः ॥
सोऽङ्गदं रोपताम्राक्ष. सन्दिदेश महायशा' ।
सुग्रीवः कथ्यतां वत्स ममागमनमित्युत ॥
एष रामानुज. प्राप्तस्त्वत्सकाशमरिन्दम ।
भ्रातुर्व्यसनसन्तप्तो द्वारि तिष्ठति लक्ष्मणः ॥
तस्य वाक्यं यदि रुचि क्रियतां साधु वानर. ।
इत्युक्त्वा शीघ्रमागच्छ वत्स वाक्यमरिन्दम ॥
लक्ष्मणस्य वच' श्रुत्वा शोकाविष्टोऽङ्गदोऽब्रवीत् ।
पितु समीपमागम्य सौमित्रिरयमागत. ॥
सोऽयं रोपपरीताक्षो द्वारि तिष्ठति वीर्यवान् ।
गच्छ शीघ्रं महाराज रोषो ह्यस्योपशाम्यताम् ॥
अङ्गदस्य वचः श्रुत्वा सुग्रीवः सचिवैः सह ।
लक्ष्मणं कुपितं श्रुत्वा मुमोचासनमात्मवान् ॥
स च तानब्रवीद्वाक्यं निश्चित्य गुरुलाघवम् ।
मन्त्रज्ञान्मन्त्रकुशलो मन्त्रेषु परिनिष्ठितः ॥
सर्वथा सुकरं मित्रं दुष्करं प्रतिपालनम् ।
अनित्यत्वात्तु चित्तानां प्रीतिरल्पेऽपि भिद्यते ॥
सुग्रीवेणैवमुक्ते तु हनूमान्हरिपुंगवः ।
उवाच स्वेन तर्केण मध्ये वानरमन्त्रिणाम् ॥
त्वं प्रमत्तो न जानीषे कालं कालविदां वर ।

फुल्लसप्तच्छदश्यामा प्रवृत्ता तु शरच्छुभा ॥
वचनं मर्षणीयते राघवस्य महात्मन. ।
अथ प्रतिसमादिष्टो लक्ष्मणः परवीरहा ।
प्रविवेश गुहां रम्यां किष्किन्धां रामशासनात् ॥
तत सुग्रीवमासीनं काञ्चने परमासने ।
महार्हास्तरणोपेतं ददर्शादित्यसंनिभम् ॥
सुग्रीवो लक्ष्मणं दृष्ट्वा बभूव व्याधितेन्द्रियः ॥
क्रुद्धं नि.श्वसमानं तं प्रदीप्तमिव तेजसा ।
उत्पपात हरिश्रेष्ठो हित्वा सौवर्णमासनम् ॥
ननु नाम कृतार्थेन त्वया रामस्य वानर ।
सीताया मार्गणे यत्नः कर्तव्यः कृतमिच्छता ॥
स त्वं ग्राम्येषु भोगेषु सक्तो मिथ्याप्रतिश्रव. ।
न त्वां रामो विजानीते सर्पं मण्डूकराविणम् ॥
न नूनमिक्ष्वाकुवरस्य कार्मुकाच्छरांश्च तान्पश्यसि वज्रसंनिभान् ।
ततः सुखं नाम निषेवसे सुखी न रामकार्यं मनसाप्यवेक्षसे ॥
तथा ब्रुवाणं सौमित्रिं प्रदीप्तमिव तेजसा ।
अब्रवील्लक्ष्मणं तारा ताराधिपनिभानना ॥
नैवं लक्ष्मण वक्तव्यो नायं परुषमर्हति ।
हरीणामीश्वरः श्रोतुं तव वक्त्राद्विशेषतः ॥
नैवाकृतज्ञः सुग्रीवो न शठो नापि दारुणः ।
नैवानृतकथो वीर न जिह्मश्च कपीश्वरः ॥
उपकारं कृतं वीरो नाप्ययं विस्मृतः कपिः ।

रामेण वीर सुग्रीवो यदन्यैर्दुष्कर रणे ॥
इत्युक्तस्तारया वाक्यं प्रश्रित धर्मसंहितम् ।
मृदुस्वभाव· सौमित्रि प्रतिजग्राह तद्वच. ॥
तस्मिन्प्रतिगृहीते तु वाक्ये हरिगणेश्वरः ।
लक्ष्मणात्सुमहत्त्रासं वस्त्रं क्लिन्नमिवात्यजत् ॥
तत. कण्ठगतं माल्यं चित्रं बहुगुणं महत् ।
चिच्छेद विमदश्चासीत्सुग्रीवो वानरेश्वरः ॥
स लक्ष्मणं भीमबल सर्ववानरसत्तमः ।
अब्रवीत्प्रश्रित वाक्य सुग्रीव· संप्रहर्षयन् ॥
प्रनष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् ।
रामप्रसादात्सौमित्रे पुनश्चाप्तमिद मया ॥
क· शक्तस्तस्य देवस्य ख्यातस्य स्वेन कर्मणा ।
तादृश प्रतिकुर्वीत अंशेनापि नृपात्मज ॥
सीतां प्राप्स्यति धर्मात्मा वधिष्यति च रावणम् ।
सहायमात्रेण मया राघवः स्वेन तेजसा ॥
यदि किंचिदतिक्रान्तं विश्वासात्प्रणयेन वा ।
प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति ॥
इति तस्य ब्रुवाणस्य सुग्रीवस्य महात्मन. ।
अभवल्लक्ष्मणः प्रीतः प्रेम्णा चेदमुवाच ह ॥
सर्वथा हि मम भ्राता सनाथो वानरेश्वर ।
त्वया नाथेन सुग्रीव प्रश्रितेन विशेषत· ॥
सहायेन तु सुग्रीव त्वया रामः प्रतापवान् ।

वधिष्यति रणे शत्रूनचिरान्नात्र संशयः ॥
धर्मज्ञस्य कृतज्ञस्य सङ्ग्रामेष्वनिवर्त्तिनः ।
उपपन्नं च युक्तं च सुग्रीव तव भाषितम् ॥
एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना ।
हनूमन्तं स्थितं पार्श्वे वचनं चेदमब्रवीत् ॥
वनेषु च सुरम्येषु सुगन्धिषु महत्सु च ।
तापसाश्रमरम्येषु वनान्तेषु समन्ततः ॥
तांस्तांस्त्वमानय क्षिप्रं पृथिव्या सर्ववानरान् ।
सामदानादिभिः कल्यैर्वानरैर्वेगवत्तरैः ॥
तस्य वानरराजस्य श्रुत्वा वायुसुतो वचः ।
दिक्षु सर्व्वासु विक्रान्तान् प्रेषयामास वानरान् ॥
ते तु सर्व्वे हरिवरा पृथिव्या सर्व्ववानरान् ।
संचोदयित्वा त्वरितः यूथानां जग्मुरग्रतः ॥
किष्किन्धां त्वरया प्राप्ताः सुग्रीवो यत्र वानरः ।
वानरान्सान्त्वयित्वा च सर्वानेव व्यसर्जयत् ।
परिकीर्णो ययौ तत्र यत्र रामो व्यवस्थितः ॥
अवातरन्महातेजाः शिबिकायाः सलक्ष्मणः ।
आसाद्य च ततो रामं कृताञ्जलिपुटोऽभवत् ॥
पादयोः पतितं मूर्ध्ना तमुत्थाप्य हरीश्वरम् ।
प्रेम्णा च बहुमानाच्च राघवः परिषस्वजे ॥
ततः स सुग्रीवमवेक्ष्य वीर्यवान्हरिप्रवीरस्य निदेशवर्तिनः ।
बभूव हर्षाद्वसुधाधिपात्मजः प्रबुद्धनीलोत्पलतुल्यदर्शनः ॥

एतस्मिन्नन्तरे चैव रजः समभिवर्तत ।
उष्णतीव्रां सहस्रांशोश्छादयद्गगने प्रभाम् ॥
ततो नरेन्द्रसंकाशैस्तीक्ष्णदंष्ट्रैर्महाबलैः ।
कृत्स्ना संछादिता भूमिरसंख्येयै. प्लवंगमैः ॥
अथ राजा समृद्धार्थ सुग्रीव प्लवगेश्वरः ।
उवाच नरशार्दूलं रामं परबलार्दनम् ॥
आगता विनिविष्टाश्च बलिन कामचारिणः ।
वानरेन्द्रा महेन्द्राभा ये मद्विषयवासिनः ॥
यन्मन्यसे नरव्याघ्र प्राप्तकाल तदुच्यताम् ।
त्वत्सैन्य त्वद्वशे युक्तमाज्ञापयितुमर्हसि ॥
काममेवमिदं कार्यं विदितं मम तत्त्वत ।
तथापि तु यथायुक्तमाज्ञापयितुमर्हसि ॥
तथा ब्रुवाणं सुग्रीवं रामो दशरथात्मजः ।
बाहुभ्यां संपरिष्वज्य इदं वचनमब्रवीत् ॥
ज्ञायतां सौम्य वैदेही यदि जीवति वा न वा ।
स च देशो महाप्राज्ञ यस्मिन्वसति रावणः ॥
अभिगम्य तु वैदेहीं निलयं रावणस्य च ।
प्राप्तकालं विधास्यामि तस्मिन्काले सह त्वया ॥
एवमुक्तस्तु सुग्रीवो विनतं नाम यूथपम् ।
अब्रवीद्रामसांनिध्ये लक्ष्मणस्य च धीमतः ॥
अधिगच्छ दिशं पूर्वां सशैलवनकाननाम् ।
मार्गध्वं गिरिदुर्गेषु वनेषु च नदीषु च ॥

तत. प्रस्थाप्य सुग्रीवस्तन्महद्वानर बलम् ।
दक्षिणां प्रेषयामास वानरानभिलक्षितान् ॥
अङ्गदप्रमुखान्वीरान्वीर· कपिगणेश्वरः ॥
ततः संदिश्य सुग्रीव श्वशुरं पश्चिमां दिशम् ।
वीर शतबलं नाम वानर वानरेश्वर ॥
उवाच राजा सर्वज्ञ सर्ववानरसत्तम· ।
दिशं ह्युदीचीं विक्रान्त हिमशैलावतंसिकाम् ।
सर्वतः परिमार्गध्वं रामपत्नीं यशस्विनीम् ॥
विशेषेण तु सुग्रीवो हनूमत्यर्थमुक्तवान् ।
स हि तस्मिन्हरिश्रेष्ठे निश्चितार्थोऽर्थसाधने ॥
तत· कार्यसमासङ्गमवगम्य हनूमति ।
विदित्वा हनुमन्तं च चिन्तयामास राघव· ॥
ददौ तस्य तत प्रीतः स्वनामाङ्कोपशोभितम् ।
अङ्गुलीयमभिज्ञानं राजपुत्र्याः परंतपः ॥
अनेन त्वां हरिश्रेष्ठ चिह्नेन जनकात्मजा ।
मत्सकाशादनुप्राप्तमनुद्विग्नानुपश्यति ॥
स तद्गृह्य हरिश्रेष्ठः कृत्वा मूर्ध्नि कृताञ्जलिः ।
वन्दित्वा चरणौ चैव प्रस्थित. प्लवगर्षभः ॥
एवं संचोदिताः सर्वे राज्ञा वानरयूथपाः ।
स्वां स्वां दिशमभिप्रेत्य त्वरिताः संप्रतस्थिरे ॥
नदन्तश्चोन्नदन्तश्च गर्जन्तश्च प्लवंगमा. ।
क्ष्वेडन्तो धावमानाश्च विनदन्तो महाबलाः ॥

ते सरांसि सरित्कक्षानाकाश नगराणि च ।
नदीदुर्गास्तथा देशान्विचिन्वन्ति समन्ततः ॥
विचित्य दिवसं सर्वे सीताधिगमने धृता ।
समायान्ति स्म मेदीन्या निशाकालेषु वानरा. ॥
विचित्य तु दिशं पूर्वां यथोक्तां सचिवैः सह ।
अदृष्ट्वा विनत सीतामाजगाम महाबल ॥
दिशमप्युत्तरां सर्वां विविच्य स महाकपिः ।
आगत· सह सैन्येन भीत शतबलिस्तदा ॥
सुषेण पश्चिमामाशां विविच्य सह वानरैः ।
समेत्य मासे पूर्णे तु सुग्रीवमुपचक्रमे ॥
सह ताराङ्गदाभ्यां तु संगम्य हनुमान्कपि. ।
विचिनोति च विन्ध्यस्य गुहाश्च गहनानि च ॥
ततस्ते ददृशुर्घोरं सागरं वरुणालयम् ।
अपारमभिगर्जन्तं घोरैरूर्मिभिराकुलम् ॥
दक्षिणस्य समुद्रस्य समासाद्योत्तरां दिशम् ।
संनिवेशं ततश्चक्रुर्हरिवीरा महाबलाः ॥
आकाशमिव दुष्पारं सागरं प्रेक्ष्य वानराः ।
विषेदुः सहिताः सर्वे कथं कार्यमिति ब्रुवन् ॥
ततस्तान्हरिवृद्धांश्च तच्च सैन्यमरिंदम· ।
अनुमान्याङ्गदः श्रीमान्वाक्यमर्थवदब्रवीत् ॥
यदि कश्चित्समर्थो वः सागरप्लवने हरिः ।
स ददात्विह नः शीघ्रं पुण्यामभयदक्षिणाम् ॥

अङ्गदस्य वचः श्रुत्वा न कश्चित्किंचिदब्रवीत् ।
स्तिमितेवाभवत्सर्वा सा तत्र हरिवाहिनी ॥
ततः प्रतीतं प्लवतां वरिष्ठमेकान्तमाश्रित्य सुखोपविष्टम् ।
संचोदयामास हरिप्रवीरो हरिप्रवीरं हनुमन्तमेव ॥
उत्तिष्ठ हरिशार्दूल लङ्घयस्व महार्णवम् ।
परा हि सर्वभूतानां हनुमन्या गतिस्तव ॥
ततः कपीनामृषभेण चोदितः प्रतीतवेगः पवनात्मजः कपिः ।
प्रहर्षयंस्तां हरिवीरवाहिनीं चकार रूपं पवनात्मजस्तदा ॥
तस्य संस्तूयमानस्य वृद्धैर्वानरपुंगवैः ।
तेजसापूर्यमाणस्य रूपमासीदनुत्तमम् ॥
हरीणामुत्थितो मध्यात्संप्रहृष्टतनूरुहः ।
अभिवाद्य हरीन्वृद्धान्हनूमानिदमब्रवीत् ॥
बुद्ध्या चाहं प्रपश्यामि मनश्चेष्टा च मे तथा ।
अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं प्लवंगमाः ॥
ततस्तु मारुतप्रख्यः स हरिर्मारुतात्मजः ।
आरुरोह नगश्रेष्ठं महेन्द्रमरिमर्दनः ॥
स वेगवान्वेगसमाहितात्मा हरिप्रवीरः परवीरहन्ता ।
मनः समाधाय महानुभावो जगाम लङ्कां मनसा मनस्वी ॥
ततो रावणनीतायाः सीतायाः शत्रुकर्षणः ।
इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥
दुष्करं निष्प्रतिद्वन्द्वं चिकीर्षन्कर्म वानरः ।
समुदग्रशिरोग्रीवो गवां पतिरिवाबभौ ॥

स सूर्याय महेन्द्राय पवनाय स्वयंभुवे ।
भूतेभ्यश्चाञ्जलिं कृत्वा चकार गमने मतिम् ॥
पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुञ्जरः ।
निकुच्य कर्णौ हनुमानुत्पतिष्यन्महाबलः ॥
वानरान्वानरश्रेष्ठ इदं वचनमब्रवीत् ।
यथा राघवनिर्मुक्तः शरः श्वसनविक्रमः ।
गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम् ।
नहि द्रक्ष्यामि यदि तां लङ्कायां जनकात्मजाम् ॥
आनयिष्यामि वा लङ्कां समुत्पाट्य सरावणाम् ।
एवमुक्त्वा तु हनुमान्वानरो वानरोत्तमः ॥
हनूमान्पर्वताकारो बभूवाद्भुतदर्शनः ॥
यं यं देशं समुद्रस्य जगाम स महाकपिः ।
स तु तस्याङ्गवेगेन सोन्माद इव लक्ष्यते ॥
प्लवमानं तु तं दृष्ट्वा प्लवगं त्वरितं तदा ।
ववृषुस्तत्र पुष्पाणि देवगन्धर्वदानवाः ॥
ततापं नहि तं सूर्यः प्लवन्तं वानरेश्वरम् ।
सिषेवे च तदा वायू रामकार्यार्थसिद्धये ॥
हिरण्यगर्भो मैनाको निशम्य लवणाम्भसः ।
उत्पपात जलात्तूर्णं महाद्रुमलतावृतः ॥
दर्शयामास शृङ्गाणि सागरेण नियोजितः ॥
स तमुच्छ्रितमत्यर्थं महावेगो महाकपिः ।
उरसा पातयामासजीमूतमिव मारुतः

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
अब्रुवन्सूर्यसंकाशां सुरसां नागमातरम् ॥
अयं वातात्मजः श्रीमान्प्लवते सागरोपरि ।
हनूमान्नाम तस्य त्वं मुहूर्तं विघ्नमाचर ॥
राक्षसं रूपमास्थाय सुघोरं पर्वतोपमम् ।
एवमुक्ता तु सा देवी दैवतैरभिसत्कृता ।
समुद्रमध्ये सुरसा बिभ्रती राक्षसं वपुः ॥
तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत् ।
बलं जिज्ञासमाना सा नागमाता हनूमतः ॥
निविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम ।
वर एष पुरा दत्तो मम धात्रेति सत्वरा ॥
व्यादाय विपुलं वक्त्रं स्थिता सा मारुतेः पुरः ।
एवमुक्तः सुरसया क्रुद्धो वानरपुंगवः ॥
अब्रवीत्कुरु वै वक्त्रं येन मां विसहिष्यसि ।
इत्युक्त्वा सुरसां क्रुद्धो दशयोजनमायतम् ॥
दशयोजनविस्तारो हनूमानभवत्तदा ।
चकार सुरसाप्यास्यं विंशद्योजनमायतम् ॥
तद् दृष्ट्वा व्यादितं त्वास्यं वायुपुत्रः स बुद्धिमान् ।
स संक्षिप्यात्मनः कायं जीमूत इव मारुतिः ।
तस्मिन्मुहूर्ते हनुमान्बभूवाङ्गुष्ठमात्रकः ॥
सोऽभिपद्याथ तद्वक्त्रं निष्पत्य च महाबलः ।
अन्तरिक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ॥

प्रविष्टोऽस्मि हि ते वक्त्रं दाक्षायणि नमोऽस्तु ते ।
गमिष्ये यत्र वैदेही सत्याश्चासीद्वरस्तव ॥
तं दृष्ट्वा वदनान्मुक्तं चन्द्रं राहुमुखादिव ।
अब्रवीत्सुरसा देवी स्वेन रूपेण वानरम् ॥
अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ।
समानय च वैदेहीं राघवेण महात्मना ॥
स सागरमनाधृष्यमतिक्रम्य महाबलः ।
त्रिकूटस्य तटे लङ्कां स्थितां स्वस्थो ददर्श ह ॥
स तु वीर्यवतां श्रेष्ठः प्लवतामपि चोत्तमः ।
जगाम वेगवाँल्लङ्कां लङ्घयित्वा महोदधिम् ॥
ततः स चिन्तयामास मुहूर्तं कपिकुञ्जरः ।
केनोपायेन पश्येयं मैथिलीं जनकात्मजाम् ।
अदृष्टो राक्षसेन्द्रेण रावणेन दुरात्मना ॥
इहाहं यदि तिष्ठामि स्वेन रूपेण संवृतः ।
विनाशमुपयास्यामि भर्तुरर्थश्च हास्यति ॥
तदहं स्वेन रूपेण रजन्यां ह्रस्वतां गतः ।
लङ्कामभिपतिष्यामि राघवस्यार्थसिद्धये ॥
रावणस्य पुरीं रात्रौ प्रविश्य सुदुरासदाम् ।
प्रविश्य भवनं सर्वं द्रक्ष्यामि जनकात्मजाम् ॥
इति निश्चित्य हनुमान्सूर्यस्यास्तमयं कपिः ।
आचकाङ्क्षे तदा वीरो वैदेह्या दर्शनोत्सुकः ।
सूर्ये चास्तं गते रात्रौ देहं संक्षिप्य मारुतिः ।

प्रविवेश पुरीं रम्यां प्रविभक्तमहापथाम् ॥
चन्द्रोऽपि साचिव्यमिवास्य कुर्वंस्तारागणैर्मध्यगतो विराजन् ।
ज्योत्स्नावितानेन वितत्य लोकानुत्तिष्ठतेऽनेकसहस्ररश्मिः ॥
शङ्खप्रभं क्षीरमृणालवर्णमुद्गच्छमानं व्यवभासमानम् ।
ददर्श चन्द्रं स कपिप्रवीरः पोप्लूयमानं सरसीव हंसम् ॥
प्रविश्य नगरीं लङ्कां कपिराजहितकरः ।
स निकामं विमानेषु विचरन्कामरूपधृक् ।
विचचार कपिर्लङ्कां लाघवेन समन्वितः ॥
आससाद च लक्ष्मीवान्राक्षसेन्द्रनिवेशनम् ।
प्राकारेणार्कवर्णेन भास्वरेणाभिसंवृतम् ॥
मार्गमाणस्तु वैदेहीं सीतामायतलोचनाम् ।
सर्वतः परिचक्राम हनूमानरिसूदनः ॥
पीत्वाप्युपरतं चापि ददर्श स महाकपिः ।
भास्वरे शयने वीरं प्रसुप्तं राक्षसाधिपम् ॥
गौरीं कनकवर्णाभामिष्टामन्तःपुरेश्वरीम् ।
कपिर्मन्दोदरीं तत्र शयानां चारुरूपिणीम् ॥
स तां दृष्ट्वा महाबाहुर्भूषिता मारुतात्मजः ।
तर्कयामास सीतेति रूपयौवनसंपदा ।
हर्षेण महता युक्तो ननन्द हरियूथपः ॥
आस्फोटयामास चुचुम्ब पुच्छं ननन्द चिक्रीड जगौ जगाम ।
स्तम्भानरोहन्निपपात भूमौ निदर्शयन्स्वां प्रकृतिं कपीनाम् ॥
अवधूय च तां बुद्धिं बभूवावस्थितस्तदा ।

जगाम चापरां चिन्तां सीता प्रति महाकपिः ॥
न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी ।
न भोक्तुं नाप्यलंकर्तुं न पानमुपसेवितुम् ॥
नान्यं नरमुपस्थातुं सुराणामपि चेश्वरम् ।
नहि रामसमः कश्चिद्विद्यते त्रिदशेष्वपि ॥
अन्येयमिति निश्चित्य भूयस्तत्र चचार सः ।
पानभूमौ हरिश्रेष्ठः सीतासंदर्शनोत्सुकः ॥
स चिन्तयामास ततो महाकपिः प्रियामपश्यन्रघुनन्दनस्य ताम् ।
ध्रुवं न सीता ध्रियते यथा न मे विचिन्वतो दर्शनमेति मैथिली ॥
सा राक्षसानां प्रवरेण बाला स्वशीलसंरक्षणतत्परा सती ।
अनेन नूनं प्रति दुष्टकर्मणा हता भवेदार्यपथे परे स्थिता ॥
दृष्टमन्तःपुरं सर्वं दृष्टा राक्षसयोषितः ।
न सीता दृश्यते साध्वी वृथा जातो मम श्रमः ॥
किं नु मां वानराः सर्वे गतं वक्ष्यन्ति संगताः ।
गत्वा तत्र त्वया वीर किं कृतं तद्वदस्व नः ॥
अदृष्ट्वा किं प्रवक्ष्यामि तामहं जनकात्मजाम् ।
किं वा वक्ष्यति वृद्धश्च जाम्बवानङ्गदश्च सः ॥
अवतीर्य विमानाच्च हनूमान्मारुतात्मजः ।
चिन्तामुपजगामाथ शोकोपहतचेतनः ॥
सोऽहं नैव गमिष्यामि किष्किन्धां नगरीमितः ।
नहि शक्ष्याम्यहं द्रष्टुं सुग्रीवं मैथिलीं विना ॥
सम्यगापः प्रवेक्ष्यामि न चेत्पश्यामि जानकीम् ॥

रावणं वा वधिष्यामि दशग्रीवं महाबलम् ।
यावत्सीता न पश्यामि रामपत्नी यशस्विनीम् ।
तावदेतां पुरीं लङ्का विचिनोमि पुनः पुनः ॥
अशोकवनिका चापि महतीयं महाद्रुमा ।
इमामधिगमिष्यामि नहीयं विचिता मया ॥
स प्रविश्य विचित्रां ता विहगैरभिनादिताम् ।
राजतैः काञ्चनैश्चैव पादपैः सर्वतो वृताम् ॥
मार्गमाणो वरारोहां राजपुत्रीमनिन्दिताम् ।
सुखप्रसुप्तान्विहगान्बोधयामास वानरः ॥
काञ्चनीं शिंशपामेकां ददर्श स महाकपिः ।
तामारुह्य महावेगः शिंशपां पर्णसंवृताम् ॥
स वीक्षमाणस्तत्रस्थो मार्गमाणश्च मैथिलीम् ।
ततो मलिनसंवीतां राक्षसीभिः समावृताम् ॥
उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः ।
ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ॥
तां विलोक्य विशालाक्षीमधिकं मलिनां कृशाम् ॥
तर्कयामास सीतेति कारणैरुपपादिभिः ।
वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत् ।
तान्याभरणजालानि गात्रशोभीन्यलक्षयत् ॥
स मुहूर्तमिव ध्यात्वा वाष्पपर्याकुलेक्षणः ।
सीतामाश्रित्य तेजस्वी हनूमान्विललाप ह ॥
स ददर्श विदूरस्था राक्षसीर्घोरदर्शनाः ॥

अशोकवनिकामध्ये शोकसागरमाप्लुताम् ।
ताभिः परिवृता तत्र सग्रहामिव रोहिणीम् ॥
ददर्श हनुमांस्तत्र लतामकुसुमामिव ।
सा मलेन च दिग्धाङ्गी वपुषा चाप्यलङ्कृता ।
मृणाली पङ्कदिग्धेव विभाति च न भाति च ॥
तथा विप्रेक्षमाणस्य वनं पुष्पितपादपम् ।
विचिन्वतश्च वैदेहीं किंचिच्छेषा निशाभवत् ॥
अथ मङ्गलवादित्रैः शब्दैः श्रोत्रमनोहरैः ।
प्राबोध्यत महाबाहुर्दशग्रीवो महाबलः ॥
स सर्वाभरणैर्युक्तो बिभ्रच्छ्रियमनुत्तमाम् ।
तन्मृगद्विजसंघुष्टं प्रविष्टः प्रमदावनम् ॥
तस्मिन्नेव ततः काले राजपुत्री त्वनिन्दिता ।
रूपयौवनसंपन्नं भूषणोत्तमभूषितम् ॥
ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् ।
प्रावेपत वरारोहा प्रवाते कदली यथा ॥
समीक्षमाणां रुदतीमनिन्दितां सुपक्ष्मताम्रायतशुक्ललोचनाम् ।
अनुव्रतां राममतीव मैथिलीं प्रलोभयामास वधाय रावणः ॥
भव मैथिलि भार्या मे मोहमेतं विसर्जय ।
बह्वीनामुत्तमस्त्रीणां ममाग्रमहिषी भव ॥
लोकेभ्यो यानि रत्नानि संप्रमथ्याहृतानि मे ।
तानि ते भीरु सर्वाणि राज्यं चैव ददामि ते ॥
विजित्य पृथिवीं सर्वां नानानगरमालिनीम् ।

जनकाय प्रदास्यामि तव हेतोर्विलासिनि ॥
इच्छ मां क्रियतामद्य प्रतिकर्म तवोत्तमम् ।
सुप्रभाण्यवसज्जन्ता तवाङ्गे भूषणानि हि ॥
साधु पश्यामि ते रूपं सुयुक्त प्रतिकर्मणा ।
प्रतिकर्माभिसयुक्ता दाक्षिण्येन वरानने ॥
तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः ।
रावणं पृष्ठत' कृत्वा भूयो वचनमब्रवीत् ।
नाहमौपयिकी भार्या परभार्या सती तव ॥
साधु धर्ममवेक्षस्व साधु साधु व्रत चर ।
यथा तव तथान्येषा रक्ष्या दारा निशाचर ॥
शक्या लोभयितुं नाहमैश्वर्येण धनेन वा ।
अनन्या राघवेणाहं भास्करेण यथा प्रभा ॥
सीताया वचनं श्रुत्वा परुषं राक्षसेश्वर' ।
प्रत्युवाच तत सीतां विप्रिय प्रियदर्शनाम ॥
परुषाणि हि वाक्यानि यानि यानि ब्रवीपि माम् ।
तेष तेषु वधा युक्तस्तव मैथिलि दारुण ॥
द्वाभ्यामूर्ध्वं तु मासाभ्या भर्तार मामनिच्छतीम ।
मम त्वां प्रातराशार्थे सूदाश्छेत्स्यन्ति खण्डशः ॥
इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावण' ।
सददर्श ततः सर्वा राक्षसीर्घोरदर्शना' ॥
यथा मद्वशगा सीता क्षिप्रंभवति जानकी ।
तथा कुरुत राक्षस्य. सर्वाः क्षिप्रं समेत्य वा ॥

प्रतिलोमानुलोमैश्च सामदानादिभेदनैः ।
आवर्जयत वैदेहीं दण्डस्योद्यमनेन च ॥
संदिश्य च ततः सर्वा राक्षसीर्निर्जगाम ह ।
निष्क्रान्ते राक्षसेन्द्रे तु पुनरन्तःपुरं गते ।
राक्षस्यो भीमरूपास्ताः सीतां समभिदुद्रुवुः ॥
ततः सीतामुपागम्य राक्षस्यः क्रोधमूर्च्छिताः ।
परं परुषया वाचा वैदेहीमिदमब्रुवन् ॥
पौलस्त्यस्य वरिष्ठस्य रावणस्य महात्मनः ।
दशग्रीवस्य भार्यात्वं सीते न बहु मन्यसे ॥
प्रियां बहुमतां भार्यां त्यक्त्वा राजा महाबलः ।
सर्वासां च महाभागां त्वामुपैष्यति रावणः ॥
राक्षसीनां वचः श्रुत्वा सीता पद्मनिभेक्षणा ।
नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥
यदिदं लोकविद्विष्टमुदाहरत संगताः ।
नैतन्मनसि वाक्यं मे किल्बिषं प्रतितिष्ठति ॥
न मानुषी राक्षसस्य भार्या भवितुमर्हति ।
कामं खादत मां सर्वा न करिष्यामि वो वचः ॥
दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः ।
तं नित्यमनुरक्तास्मि यथा सूर्यं सुवर्चला ॥
सीताया वचनं श्रुत्वा राक्षस्यः क्रोधमूर्छिताः ।
भर्त्सयन्ति स्म परुषैर्वाक्यै रावणचोदिताः ॥
ततस्तां शिंशपां सीता राक्षसीभिः समावृता ।

अभिगम्य विशालाक्षी तस्थौ शोकपरिप्लुता ॥
अथ तासां वदन्तीनां परुषं दारुणं बहु ।
राक्षसीनामसौम्यानां रुरोद जनकात्मजा ॥
सा निःश्वसन्ती शोकार्ता कोपापहृतचेतना ।
आर्ता व्यसृजदश्रूणि मैथिली विललाप च ॥
हा रामेति च दुःखार्ता हा पुनर्लक्ष्मणेति च ।
हा श्वश्रूर्मम कौसल्ये हा सुमित्रेति भामिनी ॥
लोकप्रवादः सत्योऽयं पण्डितैः समुदाहृतः ।
अकाले दुर्लभो मृत्युः स्त्रिया वा पुरुषस्य वा ॥
यत्राहमाभिः क्रूराभी राक्षसीभिरिहार्दिता ।
जीवामि हीना रामेण मुहूर्तमपि दुःखिता ॥
धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् ।
न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितम् ॥
अश्मसारमिदं नूनमथवाप्यजरामरम् ।
हृदयं मम येनेदं न दुःखेन विशीर्यते ॥
धिङ्मामनार्यामसतीं याहं तेन विना कृता ।
मुहूर्तमपि जीवामि जीवितं पापजीविका ॥
चरणेनापि सव्येन न स्पृशेयं निशाचरम् ।
रावणं किं पुनरहं कामयेयं निशाचरम् ॥
छिन्ना भिन्ना प्रभिन्ना वा दीप्तावाग्नौ प्रदीपिता ।
रावणं नोपतिष्ठेयं किं प्रलापेन वश्चिरम् ॥
इत्युक्ताः सीतया घोरं राक्षस्यः क्रोधमूर्च्छिताः ।

काश्चिज्जग्मुस्तदाख्यातुं रावणस्य दुरात्मनः ॥
ततः सीतामुपागम्य राक्षस्यो भीमदर्शनाः ।
पुनः परुषमेकार्थमनर्थार्थमथाब्रुवन् ॥
अद्येदानीं तवानार्ये सीते पापविनिश्चये ।
राक्षस्यो भक्षयिष्यन्ति मांसमेतद्यथासुखम् ॥
सीतां ताभिरनार्याभिर्दृष्ट्वा संतर्जितां तदा ।
राक्षसी त्रिजटा वृद्धा प्रबुद्धा वाक्यमब्रवीत् ॥
आत्मानं खादतानार्या न सीतां भक्षयिष्यथ ।
जनकस्य सुतामिष्टां स्नुषां दशरथस्य च ।
स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ।
राक्षसानामभावाय भर्तुरस्या भवाय च ।
हनुमानपि विक्रान्तः सर्वं शुश्राव तत्त्वतः ।
सीतायास्त्रिजटायाश्च राक्षसानां च गर्जितम् ॥
अवेक्षमाणस्तां देवीं देवतामिव नन्दने ।
ततो बहुविधां चिन्तां चिन्तयामास वानरः ॥
यदि ह्यहं सतीमेनां शोकोपहतचेतनाम् ।
अनाश्वास्य गमिष्यामि दोषवद्गमनं भवेत् ॥
गते हि मयि तत्रेयं राजपुत्री यशस्विनी ।
परित्राणमपश्यन्ती जानकी जीवितं त्यजेत् ॥
निशाचरीणां प्रत्यक्षमक्षमं चाभिभाषितुम् ।
कथं नु खलु कर्तव्यमिदं कृच्छ्रगतो ह्यहम् ॥
रामस्तु यदि पृच्छेन्मां किं मां सीताब्रवीद्वचः ।

किमहं त प्रतिब्रूयामसभाष्य सुमध्यमाम् ॥
अन्तरं त्वहमासाद्य राक्षसीनामवस्थित ।
शनैराश्वासयाम्यद्य सतापबहुलामिमाम् ॥
यदि वाच प्रदास्यामि द्विजातिरिव सस्कृताम् ।
रावण मन्यमाना मां सीता भीता भविष्यति ॥
एवं बहुविधां चिन्ता चिन्तयित्वा महामति ।
संश्रवे मधुर वाक्य वैदेह्या व्याजहार ह ॥
राजा दशरथो नाम पुण्यशीलो महायशा. ॥
तस्य पुत्रः प्रियो ज्येष्ठ श्रेष्ठ. सर्व धनुष्मताम् ॥
स मार्गमाणस्तां देवी रामः सीतामनिन्दिताम् ॥
आससाद वने मित्र सुग्रीव नाम वानरम् ।
सुग्रीवेणाभिसंदिष्टा हरय. कामरूपिण ॥
दिक्षु सर्वासु तां देवी विचिन्वन्त सहस्रशः ।
अह संपातिवचनाच्छतयोजनमायतम् ॥
तस्या हेतोर्विशालाक्ष्या. समुद्रं वेगवान्प्लुतः ।
यथारूपां यथावर्णां यथालक्ष्मवती च ताम् ॥
अश्रौषं राघवस्याहं सेयमासादिता मया ।
विररामैवमुक्त्वा स वाचं वानरपुगव. ॥
जानकी चापि तच्छ्रुत्वा विस्मयं परमं गता ।
उन्नम्य वदनं भीरुः शिंशपामन्ववैक्षत ॥
साथ दृष्ट्वा हरिश्रेष्ठं विनीतवदवस्थितम् ।
मैथिली चिन्तयामास विस्मयं परमं गता ॥

विललाप भृश सीता करुणं भयमोहिता ।
रामरामेति दु खार्ता लक्ष्मणेति च भामिनी ॥
रुरोद सहसा सीता मन्दमन्दस्वरा सती ।
साथ दृष्ट्वा हरिवर विनीतवदुपागतम् ।
मैथिली चिन्तयामास स्वप्नोऽयमिति भामिनी ।
सोऽवतीर्य द्रुमात्तस्माद्विद्रुमप्रतिमानन' ।
विनीतवेष' कृपण: प्रणिपत्योपसृत्य च ॥
तामब्रवीन्महातेजा हनूमान्मारुतात्मज: ।
शिरस्यञ्जलिमाधाय सीतां मधुरया गिरा ॥
किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम् ।
पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम् ॥
सुराणामसुराणां च नागगन्धर्वरक्षसाम् ।
यक्षाणा किन्नराणां च का त्वं भवसि शोभने ॥
व्यञ्जनानि हि ते यानि लक्षणानि च लक्षये ।
महिषी भूमिपालस्य राजकन्या च मे मता ॥
रावणेन जनस्थानाद्बलात्प्रमथिता यदि ।
सीता त्वमसि भद्र' ते तन्ममाचक्ष्व पृच्छत. ॥
सा तस्य वचनं श्रुत्वा रामकीर्तनहर्षिता ।
उवाच वाक्यं वैदेही हनूमन्तं द्रुमाश्रितम ॥
स्नुषा दशरथस्याहं शत्रुसैन्यप्रणाशिन: ॥
दुहिता जनकस्याहं वैदेहस्य महात्मन: ।
सीतेति नाम्ना चोक्ताहं भार्या रामस्य धीमत: ॥

तस्यास्तद्वचनं श्रुत्वा हनूमान्हरिपुंगवः ।
दुःखाद्दुःखाभिभूतायाः सान्त्वमुत्तरमब्रवीत् ॥
अहं रामस्य संदेशाद् देवि दूतस्तवागतः ।
वैदेहि कुशली रामः स त्वां कौशलमब्रवीत् ॥
लक्ष्मणश्च महातेजा भर्तुस्तेऽनुचरः प्रियः ।
कृतवाञ्छोकसंतप्तः शिरसा तेऽभिवादनम् ॥
सा तयोः कुशलं देवी निशम्य नरसिंहयोः ।
प्रतिसंहृष्टसर्वाङ्गी हनूमन्तमथाब्रवीत् ॥
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मा ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥
तस्यास्तद्वचनं श्रुत्वा हनूमान्मारुतात्मजः ।
सीतायाः शोकतप्तायाः समीपमुपचक्रमे ॥
यथा यथा समीपं स हनूमानुपसर्पति ।
तथा तथा रावणं सा तं सीता परिशङ्कते ॥
तामशोकस्य शाखां तु विमुक्त्वा शोककर्शिता ।
तस्यामेवानवद्याङ्गी धरण्यां समुपाविशत् ॥
अवन्दत महाबाहुस्ततस्तां जनकात्मजाम् ।
सा चैनं भयसंत्रस्ता भूयो नैनमुदैक्षत ॥
तं दृष्ट्वा वन्दमानं च सीता शशिनिभानना ।
अब्रवीद्दीर्घमुच्छ्वस्य वानरं मधुरस्वरा ॥
माया प्रविष्टो मायावी यदि त्वं रावणः स्वयम् ।
उत्पादयसि मे भूयः संतापं तन्न शोभनम् ॥

उपवासकृशां दीना कामरूप निशाचर ।
संतापयसि मां भूय संताप तन्न शोभनम् ॥
अथवा नैतदेव हि यन्मया परिशङ्कितम् ।
मनसो हि मम प्रीतिरुत्पन्ना तव दर्शनात् ॥
यदि रामस्य दूतस्त्वमागतो भद्रमस्तु ते ।
पृच्छामि त्वां हरिश्रेष्ठ प्रिया रामकथा हि मे ॥
स्वप्नेऽपि यद्यहं वीरं राघवं सहलक्ष्मणम् ।
पश्येयं नावसीदेयं स्वप्नोऽपि मम मत्सरी ॥
किं नु स्याच्चित्तमोहोऽयं भवेद्वातगतिस्त्वियम् ।
उन्मादजो विकारो वा स्यादयं मृगतृष्णिका ॥
अथवा नायमुन्मादो मोहोऽप्युन्मादलक्षणः ।
संबुध्ये चाहमात्मानमिमं चापि वनौकसम् ॥
इत्येवं बहुधा सीता संप्रधार्य बलाबलम् ।
रक्षसां कामरूपत्वान्मेने तं राक्षसाधिपम् ॥
एतां बुद्धिं तदा कृत्वा सीता सा तनुमध्यमा ।
न प्रतिव्याजहाराथ वानरं जनकात्मजा ॥
सीताया निश्चितं बुद्ध्वा हनूमान्मारुतात्मजः ।
श्रोत्रानुकूलैर्वचनैस्तदा तां संप्रहर्षयन् ॥
दिष्ट्या जीवसि वैदेहि राक्षसीवशमागता ।
न चिराद्द्रक्ष्यसे रामं लक्ष्मणं च महारथम् ॥
अहं सुग्रीवसचिवो हनूमान्नाम वानरः ॥
प्रविष्टो नगरीं लङ्कां लङ्घयित्वा महोदधिम् ।

त्वा द्रष्टुमुपयातोऽहं समाश्रित्य पराक्रमम् ।
नाहमस्मि तथा देवि यथा मामवगच्छसि ।
विशङ्का त्यज्यतामेषा श्रद्धस्व वदतो मम ॥
भूय एव महातेजा हनूमान्पवनात्मज ।
अब्रवीत्प्रश्रितं वाक्यं सीताप्रत्ययकारणात् ॥
वानरोऽहं महाभागे दूतो रामस्य धीमतः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥
प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना ।
समाश्वसिहि भद्रं ते क्षीणदुःखफला ह्यसि ॥
गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषितम् ।
भर्तारमिव संप्राप्तं जानकी मुदिताऽभवत् ॥
चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् ।
बभूव हर्षोदग्रं च राहुमुक्त इवोडुराट् ।
ततः सा ह्रीमती बाला भर्तुः संदेशहर्षिता ।
परितुष्टा प्रियं कृत्वा प्रशशंस महाकपिम् ॥
नहि त्वां प्राकृतं मन्ये वानरं वानरर्षभ ।
यस्य ते नास्ति संत्रासो रावणादपि संभ्रमः ॥
अर्हसे च कपिश्रेष्ठ मया समभिभाषितुम् ।
यद्यसि प्रेषितस्तेन रामेण विदितात्मना ॥
प्रेषयिष्यति दुर्धर्षो रामो नह्यपरीक्षितम् ।
पराक्रममविज्ञाय मत्सकाशं विशेषतः ॥
दिष्ट्या च कुशली रामो धर्मात्मा सत्यसंगरः ।

लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः ॥
कुशली यदि काकुत्स्थः किं न सागरमेखलाम् ।
महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ॥
अथवा शक्तिमन्तौ तौ सुराणामपि निग्रहे ।
ममैव तु न दुःखानामस्ति मन्ये विपर्ययः ॥
कच्चिन्न व्यथते रामः कच्चिन्न परितप्यते ।
उत्तराणि च कार्याणि कुरुते पुरुषोत्तमः ॥
कच्चिन्न दीनः संभ्रान्तः कार्येषु च न मुह्यति ।
कच्चित्पुरुषकार्याणि कुरुते नृपतेः सुतः ॥
कच्चिन्मां व्यसनादस्मान्मोक्षयिष्यति राघवः ॥
कच्चिच्च लक्ष्मणः शूरः सुमित्रानन्दवर्धनः ।
अस्त्रविच्छरजालेन राक्षसान्विधमिष्यति ॥
सीताया वचनं श्रुत्वा मारुतिर्भीमविक्रमः ।
शिरस्यञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ॥
न त्वामिहस्थां जानीते रामः कमललोचनः ।
तेन त्वां नानयत्याशु शचीमिव पुरंदरः ॥
श्रुत्वैव च वचो मह्यं क्षिप्रमेष्यति राघवः ।
चमूं प्रकर्षन्महतीं हर्यृक्षगणसंयुताम् ॥
अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः ।
सीतेति मधुरां वाणीं व्याहरन्प्रतिबुध्यते ॥
दृष्ट्वा फलं वा पुष्पं वा यच्चान्यत्स्त्रीमनोहरम् ।
बहुशो हा प्रियेत्येवं श्वसंस्त्वामभिभाषते ॥

सा सीता वचनं श्रुत्वा पूर्णचन्द्रनिभानना ।
हनूमन्तमुवाचेद धर्मार्थसहितं वचः ॥
अमृतं विषसंपृक्त त्वया वानर भाषितम् ।
यच्च नान्यमना रामो यच्च शोकपरायण· ॥
स वाच्य. संत्वरस्वेति यावदेव न पूर्यते ।
अयं संवत्सर कालस्तावद्धि मम जीवितम् ॥
वर्तते दशमो मासो द्वौ तु शेषौ प्लवंगम ।
रावणेन नृशसेन समयो य· कृतो मम ॥
विभीषणेन च भ्रात्रा मम निर्यातनं प्रति ।
अनुनीत· प्रयत्नेन न च तत्कुरुते मतिम् ॥
ज्येष्ठा कन्या कला नाम विभीषणसुता कपे ।
तया ममैतदाख्यातं मात्रा प्रहितया स्वयम् ॥
तत· स कपिशार्दूलस्तेन वाक्येन तोषित· ।
सीतामुवाच तच्छ्रुत्वा वाक्यं वाक्यविशारदः ॥
श्रोष्यते चैव काकुत्स्थ· सर्व निरवशेषत· ।
चेष्टितं यत्त्वया देवि भाषितं च ममाग्रत· ॥
अभिज्ञानं प्रयच्छ त्वं जानीयाद्राघवो हि यत् ॥
ततो वस्त्रगतं मुक्त्वा दिव्य· चूडामणिं शुभम् ।
प्रदेयो राघवायेति सीता हनुमते ददौ ॥
मणिं दत्वा तत· सीता हनूमन्तमथाब्रवीत् ।
अभिज्ञानमभिज्ञातमेतद्रामस्य तत्त्वतः ॥
स तथेति प्रतिज्ञाय मारुतिर्भीमविक्रम· ॥

शिरसा वन्द्य वैदेही गमनायोपचक्रमे ।
ज्ञात्वा सम्प्रस्थितं देवी वानरं पवनात्मजम् ।
बाष्पगद्गदया वाचा मैथिली वाक्यमब्रवीत् ॥
हनूमन्कुशलं ब्रूयाः सहितौ रामलक्ष्मणौ ।
सुग्रीवं च सहामात्यं सर्वान्वृद्धांश्च वानरान् ।
ब्रूयास्त्वं वानरश्रेष्ठ कुशलं धर्मसंहितम् ॥
यदि वा मन्यसे वीर वसैकाहमरिंदम ।
कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥
मम चैवाल्पभाग्यायाः सांनिध्यात्तव वानर ।
अस्य शोकस्य महतो मुहूर्तं मोक्षणं भवेत् ॥
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् ।
निशम्य हनुमाञ्शेषं वाक्यमुत्तरमब्रवीत् ॥
स वानरसहस्राणां कोटीभिरभिसंवृतः ।
क्षिप्रमेष्यति वैदेही राक्षसानां निबर्हणः ॥
तदलं परितापेन देवि शोको व्यपैतु ते ।
न चिराद्द्रक्ष्यसे रामं प्रज्वलन्तमिवानलम् ॥
रुद मा देवि शोकेन मा भूत्ते मनसो भयम् ।
शचीव भर्त्रा शक्रेण सङ्गमेष्यसि शोभने ॥
श्रुत्वा तु वचनं तस्य वायुसूनोर्महात्मनः ।
उवाचात्महितं वाक्यं सीता सुरसुतोपमा ॥
त्वां दृष्ट्वा प्रियवक्तारं संप्रहृष्यामि वानर ।
अर्धसंजातसस्येव वृष्टिं प्राप्य वसुंधरा ॥

स च वाग्भिः प्रशस्ताभिर्गमिष्यन्पूजितस्तया ।
तस्माद्देशादपाक्रम्य चिन्तयामास वानरः ॥
इदमस्य नृशंसस्य नन्दनोपममुत्तमम ।
वनं नेत्रमनःकान्तं नानाद्रुमलतायुतम ॥
इदं विध्वंसयिष्यामि शुष्कं वनमिवानलः ।
अस्मिन्भग्ने ततः कोपं करिष्यति स रावणः ॥
ततो मारुतवत्क्रुद्धो मारुतिर्भीमविक्रमः ।
ऊरुवेगेन महता द्रुमान्क्षेप्तुमथारभत ॥
ततस्तद्धनुमान्वीरो बभञ्ज प्रमदावनम् ।
मत्तद्विजसमाघुष्टं नानाद्रुमलतायुतम ॥
ततः पक्षिनिनादेन वृक्षभङ्गस्वनेन च ।
बभूवुस्त्राससम्भ्रान्ताः सर्वे लङ्कानिवासिनः ॥
ततस्तु गिरिसंकाशमतिकायं महाबलम ।
राक्षस्यो वानरं दृष्ट्वा पप्रच्छुर्जनकात्मजाम् ॥
कोऽयं कस्य कुतो वायं किंनिमित्तमिहागतः ।
कथं त्वया सहानेन संवादः कृत इत्युत ॥
अथाब्रवीत्तदा साध्वी सीता सर्वाङ्गशोभना ।
रक्षसां कामरूपाणां विज्ञाने का गतिर्मम ॥
यूयमेवास्य जानीत योऽयं यद्वा करिष्यति ।
अहिरेव अहेः पादान्विजानाति न संशयः ॥
अहमप्यतिभीतास्मि नैव जानामि को ह्ययम् ।
वेद्मि राक्षसमेवैनं कामरूपिणमागतम् ॥

वैदेह्या वचनं श्रुत्वा राक्षस्यो विद्रुता द्रुतम् ।
स्थिताः काश्चिद्गताः काश्चिद्रावणाय निवेदितुम् ॥
रावणस्य समीपे तु राक्षस्यो विकृताननाः ।
विरूपं वानरं भीमं रावणाय न्यवेदिषुः ॥
अशोकवनिकामध्ये राजन्भीमवपुः कपिः ।
सीतया कृतसंवादस्तिष्ठत्यमितविक्रमः ॥
न च तं जानकी सीता हरिं हरिणलोचना ।
अस्माभिर्बहुधा पृष्टा निवेदयितुमिच्छति ॥
वासवस्य भवेद्दूतो दूतो वैश्रवणस्य वा ।
प्रेषितो वापि रामेण सीतान्वेषणकाङ्क्षया ॥
तेनैवाद्भुतरूपेण यत्तत्तव मनोहरम् ।
नानामृगगणाकीर्णं प्रमृष्टं प्रमदावनम् ॥
न तत्र कश्चिदुद्देशो यस्तेन न विनाशितः ।
यत्र सा जानकी देवी स तेन न विनाशितः ॥
चारुपल्लवपत्राढ्यं यं सीता स्वयमास्थिता ।
प्रवृद्धः शिंशपावृक्षः स च तेनाभिरक्षितः ॥
राक्षसीनां वचः श्रुत्वा रावणो राक्षसेश्वरः ।
चिताग्निरिव जज्वाल कोपसंवर्तितेक्षणः ॥
आत्मनः सदृशान्वीरान्किंकरान्नाम राक्षसान् ।
व्यादिदेश महातेजा निग्रहार्थं हनूमतः ॥
ते कपिं तं समासाद्य तोरणस्थमवस्थितम् ।
अभिपेतुर्महाभागाः पतंगा इव पावकम् ॥

हनूमानपि तेजस्वी श्रीमान्पर्वतसंनिभ. ।
क्षितावाविध्य लाङ्गूलं ननाद च महाध्वनिम् ॥
आसमादायसं भीमं परिघं तोरणाश्रितम् ।
स त परिघमादाय जघान रजनीचरान् ।
ततः स किंकरान्हत्वा हनूमान्ध्यानमास्थितः ।
वनं भग्नं मया चैत्यप्रासादो न विनाशितः ॥
संप्रधृष्य तु दुर्धर्षश्चैत्यप्रासादमुन्नतम् ।
हनूमान्प्रज्वलँल्लक्ष्म्या पारियात्रोपमोऽभवन् ॥
प्रासादस्य महांस्तस्य स्तम्भं हेमपरिष्कृतम् ।
उत्पाटयित्वा वेगेन हनूमान्मारुतात्मजः ॥
ततस्तं भ्रामयामास शतधारं महाबल. ।
तत्रचाग्नि समभवन् प्रासादश्चाप्यदह्यत ॥
संदिष्टो राक्षसेन्द्रेण प्रहस्तस्य सुतो बली ।
जम्बुमाली महादंष्ट्रो निर्जगाम धनुर्धरः ॥
तस्य विस्फारघोषेण धनुषो महता दिश. ।
प्रदिशश्च नभश्चैव सहसा समपूर्यत ॥
तं तोरणविटङ्कस्थ हनूमन्तं महाकपिम् ।
जम्बुमाली महातेजा विव्याध निशितैः शरैः ॥
चुकोप बाणाभिहतो राक्षसस्य महाकपि. ।
परिघं पातयामास जम्बुमालेर्महोरसि ॥
जम्बुमालिं सुनिहतं किंकरांश्च महाबलान् ।
चुक्रोध रावणः श्रुत्वा क्रोधसंरक्तलोचन. ॥

ततस्ते राक्षसेन्द्रेण चोदिता मन्त्रिणः सुताः ।
निर्ययुर्भवनात्तस्मात्सप्तसप्तार्चिवर्चसः ॥
स तान्प्रवृद्धान्विनिहत्य राक्षसान्महाबलश्चण्डपराक्रमः कपिः ।
युयुत्सुरन्यैः पुनरेव राक्षसैस्तदेव वीरोऽभिजगाम तोरणम् ॥
हतान्मन्त्रिसुतान्बुद्ध्वा वानरेण महात्मना ।
रावणः संवृताकारश्चकार मतिमुत्तमाम् ॥
संदिदेश दशग्रीवो वीरान्नयविशारदान् ।
हनूमद्ग्रहणे व्यग्रान्वायुवेगसमान्युधि ॥
ते स्वामिवचनं सर्वे प्रतिगृह्य महौजसः ।
समुत्पेतुर्महावेगा हुताशसमतेजसः ॥
ततः कपिस्तान्ध्वजिनीपतीन्रणे
निहत्य वीरान्सबलान्सवाहनान् ।
तथैव वीरः परिगृह्य तोरणं
कृतक्षणः काल इव प्रजाक्षये ॥
निहत्य तं वज्रिसुतोपमं रणे कुमारमक्षं क्षतजोपमेक्षणम् ।
तदेव वीरोऽभिजगाम तोरणं कृतक्षणः काल इव प्रजाक्षये ॥
ततस्तु रक्षोधिपतिर्महात्मा हनूमताक्षे निहते कुमारे ।
मनः समाधाय स देवकल्पः समादिदेशेन्द्रजितं सरोषः ॥
त्वमस्त्रविच्छस्त्रभृतां वरिष्ठः सुरासुराणामपि शोकदाता ।
सुरेषु सेन्द्रेषु च दृष्टकर्मा पितामहाराधनसंजितास्त्रः ॥
इदं च दृष्ट्वा निहतं महद्बलं कपेः प्रभावं च पराक्रमं च ।
त्वमात्मनश्चापि निरीक्ष्य सारं कुरुष्व वेगं स्वबलानुरूपम् ॥

स रथी धन्विनां श्रेष्ठ. शस्त्रज्ञोऽस्त्रविदां वर: ।
रथेनाभिययौ क्षिप्रं हनूमान्यत्र सोऽभवत् ।।
आयान्तं सरथं दृष्ट्वा पूर्णमिन्द्रध्वजं कपि: ।
ननाद च महानाद व्यवर्धत च वेगवान् ।।
तत. पैतामहं वीर सोऽस्त्रमस्त्रविदां वर ।
सदधे सुमहातेजास्त हरिप्रवर प्रति ।।
अवध्योऽयमिति ज्ञात्वा तमस्त्रेणास्त्रतत्त्ववित् ।
निजग्राह महावाहु' मारुतात्मजमिन्द्रजित् ।।
तेन बद्धस्ततोऽस्त्रेण राक्षसेन स वानर' ।
अभवन्निर्विचेष्टश्च पपात च महीतले ।।
ततस्तं राक्षसा दृष्ट्वा विनिश्चेष्टमरिंदमम् ।
बबन्धु' शणवल्कैश्च द्रुमचीरैश्च संहतै ।।
हन्यमानस्तत क्रूरै राक्षसै. कालमुष्टिभि ।
समीपं राक्षसेन्द्रस्य प्राकृष्यत स वानर: ।।
कोऽयं कस्य कुतो वापि कि कार्यं कोऽभ्युपाश्रय: ।
इति राक्षसवीराणां दृष्ट्वा संजज्ञिरे कथा ।।
हन्यता दह्यतां वापि भक्ष्यतामिति चापरे ।
राक्षसास्तत्र संक्रुद्धा. परस्परमथाब्रुवन् ।।
स ददर्श महातेजा रावण' कपिसत्तमम् ।
रक्षोभिर्विकृताकारै. कृष्यमाणमितस्तत: ।।
राक्षसाधिपतिं चापि ददर्श कपिसत्तम: ।
तेजोबलसमायुक्तं तपन्तमिव भास्करम् ।।

स राजा रोषताम्राक्षः प्रहस्तं मन्त्रिसत्तमम् ।
कालयुक्तमुवाचेदं वचो विपुलमर्थवत् ॥
दुरात्मा पृच्छ्यतामेष कुतः किं वास्य कारणम् ।
वनभङ्गे च कोऽस्यार्थो राक्षसानां च तर्जने ।
मत्पुरीमप्रधृष्यां वै गमने किं प्रयोजनम् ।
आयोधने वा किं कार्यं पृच्छ्यतामेष दुर्मतिः ॥
रावणस्य वचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत् ।
तत्त्वमाख्याहि मा ते भूद्भय वानर मोक्ष्यसे ॥
अनृतं वदतश्चापि दुर्लभं तव जीवितम् ॥
एवमुक्तो हरिवरस्तदा रक्षोगणेश्वरम् ॥
वाक्यमर्थवदव्यग्रस्तमुवाच दशाननम् ॥
अहं सुग्रीवसंदेशादिह प्राप्तस्तवान्तिके ।
राक्षसेश हरीशस्त्वां भ्राता कुशलमब्रवीत् ॥
भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः ।
धर्मार्थसहितं वाक्यमिह चामुत्र च क्षमम् ॥
परदारान्महाप्राज्ञ नापरोद्धुं त्वमर्हसि ॥
तत्त्रिकालहितं वाक्यं धर्म्यमर्थानुयायि च ।
मन्यस्व नरशार्दूलं जानकी प्रतिदीयताम् ॥
जनस्थानवधं बुद्ध्वा वालिनश्च वधं तथा ।
रामसुग्रीवसख्यं च बुद्ध्यस्व हितमात्मनः ॥
स तस्य वचनम् श्रुत्वा वानरस्य महात्मनः ।
आज्ञापयद्वधं तस्य रावणः क्रोधमूर्च्छितः ॥

वधे तस्य समाज्ञप्ते रावणेन दुरात्मना ।
निवेदितवतो दौत्यं नानुमेने विभीषणः ॥
निश्चितार्थस्ततः साम्ना पूज्य शत्रुजिदग्रजम् ।
उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ॥
क्षमस्व रोषं त्यज राक्षसेन्द्र प्रसीद मे वाक्यमिदं शृणुष्व ।
वधं न कुर्वन्ति परावरज्ञा दूतस्य सन्तो वसुधाधिपेन्द्राः ॥
विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः ।
कोपेन महताविष्टो वाक्यमुत्तरमब्रवीत् ॥
न पापानां वधे पापं विद्यते शत्रुसूदन ।
तस्मादिमं वधिष्यामि वानरं पापकारिणम् ॥
अधर्ममूलं बहुदोषयुक्तमनार्यजुष्टं वचनं निशम्य ।
उवाच वाक्यं परमार्थतत्त्वं विभीषणो बुद्धिमतां वरिष्ठः ॥
प्रसीद लङ्केश्वर राक्षसेन्द्र धर्मार्थतत्त्वं वचनं शृणुष्व ।
दूता न वध्याः समयेषु राजन्सर्वेषु सर्वत्र वदन्ति सन्तः ॥
असंशयं शत्रुरयं प्रवृद्धः कृतं ह्यनेनाप्रियमप्रमेयम् ।
न दूतवध्यां प्रवदन्ति सन्तो दूतस्य दृष्टा बहवो हि दण्डाः ॥
न चाप्यस्य कपेर्घाते कंचित्पश्याम्यहं गुणम् ।
तेष्वयं पात्यतां दण्डो यैरयं प्रेषितः कपिः ॥
तस्य तद्वचनं श्रुत्वा दशग्रीवो महात्मनः ।
देशकालहितं वाक्यं भ्रातुरुत्तरमब्रवीत् ॥
सम्यगुक्तं हि भवता दूतवध्या विगर्हिता ।
अवश्यं तु वधादन्यः क्रियतामस्य निग्रहः ॥

कपीना किल लाङ्गूलमिष्ट भवति भूषणम् ।
तदस्य दीप्यता शीघ्रं तेन दग्धेन गच्छतु ॥
आज्ञापयद्राक्षसेन्द्र पुर सर्व सचत्वरम् ।
लाङ्गूलेन प्रदीप्तेन रक्षोभि परिणीयताम् ॥
तस्य तद्वचनं श्रुत्वा राक्षसा कोपकर्कशा ।
वेष्टन्ते तस्य लाङ्गूल जीर्णै. कार्पासिकै: पटै. ॥
शुष्कमिन्धनमासाद्य वनेष्विव हुताशनम् ॥
तैलेन परिषिच्याथ तेऽग्नि तत्रोपपादयन् ।
ततस्तं सवृताकार सत्त्ववन्त महाकपिम् ॥
शङ्खभेरीनिनादैश्च घोषयन्त स्वकर्मभि ।
राक्षसा: क्रूरकर्माणश्चारयन्ति स्म ता पुरीम् ॥
दह्यमाने च लाङ्गूले चिन्तयामास वानर ।
ततश्छित्त्वा च तान्पाशान्वेगवान्वै महाकपि ॥
ह्रस्वतां परमां प्राप्तो बन्धनान्यवशातयत् ।
विमुक्तश्चाभवच्छ्रीमान्पुन: पर्वतसंनिभ ॥
वीक्षमाणस्ततो लङ्कां कपि. कृतमनोरथ: ।
वर्धमानसमुत्साह कार्यशेषमचिन्तयत् ॥
किं नु खल्ववशिष्टं मे कर्तव्यमिह सांप्रतम् ।
यदेषां रक्षसां भूय: संतापजननं भवेत् ॥
योऽयं मम लाङ्गूले दीप्यते हव्यवाहन ।
अस्य संतर्पण न्याय्य कर्तुमेभिर्गृहोत्तमै ॥
तत: प्रदीप्तलाङ्गूल: सविद्युदिव तोयद: ।

भवनाग्रेषु लङ्कायां विचचार महाकपिः ॥
गृहाद्गृह राक्षसानामुद्यानानि च वानरः ।
वीक्षमाणो ह्यसंत्रस्तः प्रासादांश्च चचार स ॥
वर्जयित्वा महातेजा विभीषणगृह प्रति ।
क्रममाणः क्रमेणैव ददाह हरिपुंगवः ॥
सर्वेषां समतिक्रम्य राक्षसेन्द्रस्य वीर्यवान् ।
आससादाथ लक्ष्मीवान्रावणस्य निवेशनम ॥
प्रदीप्तमग्निमुत्सृज्य लाङ्गूलाग्रे प्रतिष्ठितम ।
ननाद हनुमान्वीरो युगान्तजलदो यथा ॥
भवनानि व्यशीर्यन्त रत्नवन्ति महान्ति च ।
तानि भग्नविमानानि निपेतुर्वसुधातले ॥
संजज्ञे तुमुलः शब्दो राक्षसानां प्रधावताम् ।
स्वे स्वे गृहपरित्राणे भग्नोत्साहोज्झितश्रियाम् ॥
क्रन्दन्त्यः सहसा पेतुः स्तनंधयधराः स्त्रियः ।
पतन्त्यो रेजिरेऽभ्रेभ्यः सौदामन्य इवाम्बरात् ॥
ततस्तु लङ्का सहसा प्रदग्धा सराक्षसा साश्वरथा सनागा ।
सपक्षिसङ्घा समृगा सवृक्षा रुरोद दीना तुमुल सशब्दम् ॥
लङ्कां समस्तां संपीड्य लाङ्गूलाग्निं महाकपिः ।
निर्वापयामास तदा समुद्रे हरिपुंगवः ॥
अवेक्ष्य हनुमाँल्लङ्कां चिन्तयामास वानरः ॥
धिगस्तु मां सुदुर्बुद्धिं निर्लज्जं पापकृत्तमम् ।
अचिन्तयित्वा तां सीतामग्निदं स्वामिघातकम् ॥

यदर्थमयमारम्भस्तत्कार्यमवसादितम् ।
मया हि दहता लङ्का न सीता परिरक्षिता ॥
विनष्टा जानकी व्यक्तं न ह्यदग्ध' प्रदृश्यते ।
लङ्कायां कश्चिदुद्द शः सर्वा भस्मीकृता पुरी ॥
विनष्टायां तु सीतायां तावुभौ विनशिष्यतः ।
तयोर्विनाशे सुग्रीव' सबन्धुर्विनशिष्यति ॥
अथ वा चारुसर्वाङ्गी रक्षिता स्वेन तेजसा ।
न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्तते ॥
स तथा चिन्तयस्तत्र देव्या धर्मपरिग्रहम् ।
शुश्राव हनुमांस्तत्र चारणानां महात्मनाम् ॥
दग्धेय नगरी लङ्का साट्टप्राकारतोरणा ।
जानकी न च दग्धेति विस्मयोऽद्भुत एव नः ॥
ततस्तु शिंशपामूले जानकीं पर्यवस्थिताम् ।
अभिवाद्याब्रवीद्दिष्ट्या पश्यामि त्वामिहाक्षताम् ॥
ततस्त प्रस्थितं सीता वीक्षमाणा पुनः पुनः ।
भर्तुः स्नेहान्विता वाक्य' हनूमन्तमभाषत ॥
ततः स कपिशार्दूलः स्वामिसंदर्शनोत्सुकः ॥
आरुरोह गिरश्रेष्ठमरिष्टमरिमर्दनः ।
स लिलङ्घयिषुर्भीमं सलिलं लवणार्णवम् ।
कल्लोलास्फालवेलान्तमुत्पपात नभो हरिः ॥
वानरेन्द्रस्य निर्घोषं पर्जन्यनिनदोपमम् ॥
निशम्य नदतो नादं वानरास्ते समन्ततः ।

प्रहृष्टाः समपश्यन्त हनूमन्तं दिदृक्षवः ॥
ते प्रीताः पादपाग्रेषु गृह्य शाखामवस्थिताः ।
वासांसि च प्रकाशानि समाविध्यन्त वानराः ॥
ततस्तु वेगवान्वीरो गिरेर्गिरिनिभः कपिः ।
निपपात गिरेस्तस्य शिखरं पादपाकुले ॥
ततस्ते प्रीतमनसः सर्वे वानरपुंगवाः ।
उपायनानि चादाय मूलानि च फलानि च ॥
प्रत्यर्चयन्हरिश्रेष्ठं हरयो मारुतात्मजम् ।
स ताभ्यां पूजितः पूज्यः कपिभिश्च प्रसादितः ॥
दृष्टा देवीति विक्रान्तः संक्षेपेण न्यवेदयन् ।
ततो दृष्टेति वचनं महार्थममृतोपमम् ॥
निशम्य मारुतेः सर्वे मुदितावानराभवन् ।
क्ष्वेडन्त्यन्ये नदन्त्यन्ये गर्जन्त्यन्ये महाबलाः ॥
चक्रुः किलकिलामन्ये प्रतिगर्जन्ति चापरे ।
केचिदुच्छ्रितलाङ्गूलाः प्रहृष्टाः कपिकुञ्जराः ॥
आयताञ्चितदीर्घाणि लाङ्गूलानि प्रविव्यधुः ।
तं ततः प्रतिसंहृष्टः प्रीतियुक्तं महाकपिम् ॥
जाम्बवान्कार्यवृत्तान्तमपृच्छदनिलात्मजम् ।
कथं दृष्टा त्वया देवी कथं वा तत्र वर्तते ॥
तस्यां चापि कथं वृत्तः क्रूरकर्मा दशाननः ।
तत्त्वतः सर्वमेतन्नः प्रब्रूहि त्वं महाकपे ॥
श्रुतार्थाश्चिन्तयिष्यामो भूयः कार्यविनिश्चयम् ।

मनियुक्तस्तत' स्तेन सप्रहृष्ट तनूरुह' ।
नमस्यन् शिरसा देव्यै सीतायै प्रत्यभाषत ॥
दक्षिण तीरमुदधेर्लङ्का यत्र गता पुरी ॥
अस्त दिनकरे याते रक्षसां निलय पुरीम् ।
प्रविष्टोऽहमविज्ञातो रक्षोभिर्भीमविक्रमै ॥
संभाषणार्थे च मया जानक्याश्चिन्तितो विधिः ।
इक्ष्वाकुकुलवंशस्तु स्तुतो मम पुरस्कृत ॥
श्रुत्वा तु गदितां वाचं राजर्षिगणभूपिताम् ।
प्रत्यभाषत मां देवी बाष्पै पिहितलोचना ॥
कस्त्वं केन कथ चेह प्राप्तो वानरपुंगव ।
का च रामेण ते प्रीतिस्तन्मे शंसितुमर्हसि ॥
तस्यास्तद्वचनं श्रुत्वा अहमप्यब्रुवं वचः ।
देवि रामस्य भर्तुस्ते सहायो भीमविक्रम ॥
सुग्रीवो नाम विक्रान्तो वानरेन्द्रो महाबलः ।
तस्य मां विद्धि भृत्य त्वं हनूमन्तमिहागतम् ॥
भर्त्रा संप्रहितस्तुभ्यं रामेणाक्लिष्टकर्मणा ॥
इदं तु पुरुषव्याघ्रः श्रीमान्दाशरथिः स्वयम् ।
अङ्गुलीयमभिज्ञानमदात्तुभ्यं यशस्विनि ॥
एतच्छ्रुत्वा विदित्वा च सीता जनकनन्दिनी ।
ततस्तस्यै प्रणम्याहं राजपुत्र्यै समाहितः ॥
ततोऽवर्धत मे कायस्तदा पर्वतसंनिभः ।
युद्धाकाङ्क्षी वनं तस्य विनाशयितुमारभे ॥

ततः पुनर्दशग्रीवः पुत्रमक्षं महाबलम् ॥
बहुभी राक्षसैः सार्धं प्रेषयामास संयुगे ।
त तु मन्दोदरीपुत्र कुमार रणपण्डितम ॥
तच्चाप्यहं बलं सर्वं त च राक्षसपुंगवम् ॥
आयसं परिघं गृह्य तानि रक्षांस्यसूदयम ।
पुच्छेन च प्रदीप्तेन तां पुरीं साट्टगोपुराम् ।
एतत्सर्व मया तत्र यथावदुपपादितम् ।
तत्र यन्न कृतं शेष तत्सर्व क्रियतामिति ॥
एतदाख्याय तत्सर्वं हनूमान् मारुतात्मज ।
निपपात हरिश्रेष्ठः समीपेराघवस्यच ॥
हनूमांश्च महाबाहुः प्रणम्य शिरसा ततः ।
नियतामक्षतां देवीं राघवाय न्यवेदयत् ॥
दृष्टा देवीति हनुमद्वदनादमृतोपमम ।
आकर्ण्य वचनं रामो हर्षमाप सलक्ष्मण ॥
प्रीत्या च परमोपेतो राघवः परवीरहा ।
बहुमानेन महता हनूमन्तमवैक्षत ॥
वैदेहीमक्षतां श्रुत्वा रामस्तूत्तरब्रवीत् ।
क सीता वर्तते देवी कथं च मयि वर्तते ॥
उवाच वाक्यं वाक्यज्ञ. सीताया दर्शनं यथा ।
तं मणिं काञ्चनं दिव्यं दीप्यमानं स्वतेजसा ॥
दत्वा रामाय हनुमांस्ततः प्राञ्जलिरब्रवीत् ।
समुद्रं लङ्घयित्वाहं शतयोजनमायतम् ॥

अगच्छ जानकी सीतां मार्गमाणो दिदृक्षया ।
तत्र लङ्केति नगरी रावणस्य दुरात्मन ॥
तत्र सीता मया दृष्टा रावणान्त पुरे सती ।
सा मया नरशार्दूल शनैर्विश्वासिता तदा ॥
तत संभाषिता देवी सर्वमर्थ च दर्शिता ।
अभिज्ञानं च मे दत्त यथावृत्त तवान्तिके ॥
चित्रकूटे महाप्राज्ञ वायसं प्रति राघव ।
विज्ञाप्य. पुनरप्येष रामो वायुसुत त्वया ॥
अखिलेन मयादृष्ट मितिमामाह जानकी ।
अयं चास्मैप्रदातव्यो यत्नात् सुपरिरक्षित ॥
ब्रुवतावचनान्येवं सुग्रीवस्योपशृण्वत ।
एष चूडामणि: श्रीमान् मया ते यत्नरक्षित ॥
मन:शिलायास्तिलकं तत् स्मरस्वेतिचाब्रवीत् ।
एष निर्यातित: श्रीमान् मया ते वारिसंभव: ॥
एनं दृष्ट्वाप्रमोदिष्ये व्यसने त्वमिवानघ: ।
जीवितं धारयिष्यामि मासं दशरथात्मज ।
ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता ॥
इति मामब्रवीत्सीता कृशाङ्गी धर्मचारिणी ।
रावणान्त:पुरे रुद्धा मृगीवोत्फुल्ललोचना ॥
एतदेव मयाख्यातं सर्वं राघव यद्यथा ।
सर्वथा सागरजले संतार: प्रविधीयताम् ॥
एवमुक्तो हनुमता रामो दशरथात्मज: ।

तं तु दृष्ट्वा मणिश्रेष्ठ राघव. शोककर्शित· ॥
अयं हि शोभते तस्या· प्रियाया मूर्ध्नि मे मणि. ।
अद्यास्य दर्शनेनाह प्राप्ता तामिव चिन्तये ॥
किमाह सीता वैदेही ब्रूहि सौम्य पुन.पुन ।
परासुमिव तोयेन सिञ्चन्ती वाक्यवारिणा ॥
एवमुक्तस्तु हनुमान्राघवेण महात्मना ।
सीताया भाषितं सर्वं न्यवेदयत राघवे ॥
श्रुत्वा हनूमता वाक्यं यथावदभिभाषितम् ।
राम प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् ॥
कृत हनूमता कार्यं सुमहद्भुवि दुर्लभम् ।
मनसापि यदन्येन न शक्य धरणीतले ॥
इत्युक्त्वा प्रीतिहृष्टाङ्गो रामस्त परिषस्वजे ।
हनूमन्तं कृतात्मानं कृतवाक्यमुपागतम् ॥
ध्यात्वा पुनरुवाचेदं वचनं रघुसत्तम· ।
हरीणामीश्वरस्यापि सुग्रीवस्योपशृण्वतः ॥
सर्वथा सुकृतं तावत्सीतायाः परिमार्गणम् ।
सागरं तु समासाद्य पुनर्नष्टं मनो मम ॥
कथं नाम समुद्रस्य दुष्पारस्य महाम्भसः ।
हरयो दक्षिणं पारं गमिष्यन्ति समागता·
तं तु शोकपरिद्यूनं रामं दशरथात्मजम् ।
उवाच वचनं श्रीमान्सुग्रीवः शोकनाशनम् ॥
किं त्वया तप्यते वीर यथान्यः प्राकृतस्तथा ।

मैवं भूस्त्यज संतापं कृतघ्न इव सौहृदम् ॥
समुद्रं लङ्घयित्वा तु महानक्रसमाकुलम् ॥
लङ्कामारोहयिष्यामो हनिष्यामश्च ते रिपुम् ॥
सेतुरत्र यथा बद्धः यथा पश्येम तां पुरीम् ।
तस्य राक्षसराजस्य तथा त्वं कुरु राघव ॥
सुग्रीवस्य वचः श्रुत्वा हेतुमत्परमार्थवत् ।
प्रतिजग्राह काकुत्स्थो हनूमन्तमथाब्रवीत् ॥
कति दुर्गाणि दुर्गाया लङ्कायास्तद् ब्रवीष्व मे ।
ज्ञातुमिच्छामि तत्सर्वं दर्शनादिव वानर ॥
बलस्य परिमाणं च द्वारदुर्गक्रियामपि ।
सर्वमाचक्ष्व तत्त्वेन सर्वथा कुशलो ह्यसि ॥
दृढबद्धकपाटानि महापरिघवन्ति च ।
चत्वारि विपुलान्यस्या द्वाराणि सुमहान्ति च ॥
शैलाग्रे रचिता दुर्गा सा पूर्देवपुरोपमा ।
वाजिवारणसंपूर्णा लङ्का परमदुर्जया ॥
श्रुत्वा हनूमतो वाक्यं यथावदनुपूर्वशः ।
ततोऽब्रवीन्महातेजा रामः सत्यपराक्रमः ॥
यन्निवेदयसे लङ्कां पुरीं भीमस्य रक्षसः ।
क्षिप्रमेनां वधिष्यामि सत्यमेतद्ब्रवीमि ते ॥
अस्मिन्मुहूर्ते सुग्रीव प्रयाणमभिरोचये ।
युक्तो मुहूर्ते विजयं प्राप्तो मध्यं दिवाकरः ॥
सीता श्रुत्वाभियानं मे आशामेष्यति जीविते ।

तत शिखरमारुह्य रामो दशरथात्मज ।
कूर्ममीनसमाकीर्णमपश्यत्सलिलाकुलम् ॥
ते मह्यं समतिक्रम्य मलयं च महागिरिम ।
आसेदुरानुपूर्व्येण समुद्र भीमनि.स्वनम ॥
अवरुह्य जगामाशु वेलावनमनुत्तमम ।
वेलामासाद्य विपुला रामो वचनमब्रवीत् ॥
एते वयमनुप्राप्ताः सुग्रीव वरुणालयम ।
इहेदानीं विचिन्ता सा या नः पूर्वमुपस्थिता ॥
अत. परमतीरोऽय सागर' सरितां पतिः ।
न चायमनुपायेन शक्यस्तरितुमर्णवः ॥
तदिहैव निवेशोऽस्तु मन्त्र प्रस्तूयतामिह ।
सर्वा' सेना निवेश्यन्ता वेलायां हरिपुंगव ।
संप्राप्तो मन्त्रकालो नः सागरस्येह लङ्घने ॥
स्वां स्वां सेनां समुत्सृज्य माच कश्चित्कुतो व्रजेत् ।
गच्छन्तु वानराः शूरा ज्ञेयं छन्नं भयं च न ॥
रामस्य वचनं श्रुत्वा सुग्रीवः सहलक्ष्मण' ।
सेनां निवेशयत्तीरे सागरस्य द्रुमायुते ॥
लङ्कायां तु कृतं कर्म घोरं दृष्ट्वा भयावहम ।
राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना ।
अब्रवीद्राक्षसान्सर्वान्ह्रिया किंचिदवाङ्मुख' ॥
धर्षिता च प्रविष्टा च लङ्का दुष्प्रसहा पुरी ।
तेन वानरमात्रेण दृष्टा सीता च जानकी ॥

प्रामादा धर्षितश्चैत्य प्रवरा राक्षसा हता. ।
आविला च पुरी लङ्का सर्वा हनुमता कृता ॥
कि करिष्यामि भ ं व कि वा युक्तमनन्तरम ।
उच्यता न समर्थ यत्कृतं च सुकृतंभवेत् ॥
इत्युक्ता राक्षसेन्द्रेण राक्षसास्ते महाबला: ।
प्रगृह्य परमक्रुद्धा समुत्पत्य च राक्षसा ।
अब्रुवन्रावणं सर्वे प्रदीप्ता इव तेजसा ॥
अद्य राम वधिष्याम· सुग्रीव च सलक्ष्मणम ।
कृपणं च हनूमन्त लङ्का येन प्रधर्षिता ॥
तान्गृहीतायुधान्सर्वान्वारयित्वा विभीषण· ।
अब्रवीत्प्राञ्जलिर्वाक्यं पुन· प्रत्युपवेश्य तान ॥
विनश्येद्धि पुरी लङ्का शूरा सर्वे च राक्षसा· ।
रामस्य दीयतां पत्नी न स्वय यदि दीयते ॥
प्रसादये त्वां बन्धुत्वात्कुरुष्व वचनं मम ।
हितं तथ्यं त्वहं ब्रमि दीयतामस्य मैथिली ॥
त्यजाशु कोपं सुखधर्मनाशनं भजस्व धर्म रतिकीर्तिवर्धनम् ।
प्रसीद जीवेम सपुत्रबान्धवा: प्रदीयतां दाशरथाय मैथिली ॥
विभीषणवच· श्रुत्वा रावणो राक्षसेश्वर. ।
विसर्जयित्वा तान्सर्वान्प्रविवेश स्वकं गृहम ॥
तत: प्रत्युषसि प्राप्ते प्राप्तधर्मार्थनिश्चय: ।
राक्षसाधिपतेर्वेश्म भीमकर्मा विभीषण: ॥
अग्रजस्यालयं वीर. प्रविवेश महाद्युति: ।

स रावण महात्मानं विजने मन्त्रिसंनिधौ ।
उवाच हितमत्यर्थं वचनं हेतुनिश्चितम् ॥
यदाप्रभृति वैदेही संप्राप्तेह परंतप ।
तदाप्रभृति दृश्यन्ते निमित्तान्यशुभानि नः ॥
तदेवं प्रस्तुते कार्ये प्रायश्चित्तमिदं क्षमम् ।
रोचये वीर वैदेही राघवाय प्रदीयताम् ॥

निशम्य तद्वाक्यमुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत् ॥
भयं न पश्यामि कुतश्चिदप्यहं न राघवः प्राप्स्यति जातु मैथिलीम्
बृहस्पतेस्तुल्यमतेर्वचस्तन्निशम्य यत्नेन विभीषणस्य ।
ततो महात्मा वचनं बभाषे तत्रेन्द्रजिन्नैरृतयूथमुख्यः ॥
किं नाम ते तात कनिष्ठवाक्यमनर्थकं वै बहुभीतवच्च ।
अस्मिन्कुले योऽपि भवेन्न जातः सोऽपीदृशं नैव वदेन्न कुर्यात् ॥
सत्त्वेन वीर्येण पराक्रमेण धैर्येण शौर्येण च तेजसा च ।
एकः कुलेऽस्मिन्पुरुषो विमुक्तो विभीषणस्तातकनिष्ठ एषः ॥
अथेन्द्रकल्पस्य दुरासदस्य महोजसस्तद्वचनं निशम्य ।
ततो महार्थं वचनं बभाषे विभीषणः शस्त्रभृतां वरिष्ठः ॥
न तात मन्त्रे तव निश्चयोऽस्ति बालस्त्वमद्याप्यविपक्वबुद्धिः ।
तस्मात्त्वयाप्यात्मविनाशनाय वचोऽर्थहीनं बहु विप्रलप्तम् ॥
धनानि रत्नानि सुभूषणानि वासांसि दिव्यानि मणींश्च चित्रान् ।
सीतां च रामाय निवेद्य देवीं वसेम राजन्निह वीतशोकाः ॥

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम् ।
अब्रवीत्परुषं वाक्यं रावणः कालचोदितः ॥

वसेत्सहसपत्नेन क्रुद्धेनाशीविषेण च ।
न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ॥
जानामि शीलं ज्ञातीना सर्वलोकेषु राक्षस ।
हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातय. सदा ॥
नाग्निर्नान्यानि शस्त्राणि न न. पाशा भयावहा ।
घोरा· स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहा: ॥
योऽन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर ।
अस्मिन्मुहूर्ते न भवेत्त्वा तु धिक्कुलपांसन ॥
इत्युक्त: परुष वाक्य न्यायवादी विभीषण ।
उत्पपात गदापाणिश्चतुर्भि: सह राक्षसै. ॥
अब्रवीच्च तदा वाक्य जातक्रोधो विभीषण: ।
अन्तरिक्षगत. श्रीमान्भ्राता वै राक्षसाधिपम् ॥
स त्वं भ्रान्तोऽसि मे राजन्ब्रूहि मां यद्यदिच्छसि ।
ज्येष्ठो मान्य: पितृसमो न च धर्मपथे स्थित· ॥
इदं हि परुषं वाक्य न क्षमाम्यग्रजस्य ते ॥
सुलभा: पुरुषा राजन्सतत प्रियवादिन ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभ: ॥
तन्मर्षयतु यच्चोक्तं गुरुत्वाद्धितमिच्छता ।
आत्मानं सर्वथा रक्ष पुरीं चेमा सराक्षसाम् ।
स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥
निवार्यमाणस्य मया हितैषिणा न रोचते ते वचनं निशाचर ।
परान्तकाले हि गतायुषो नरा हित न गृह्णन्ति सुहृद्भिरीरितम् ॥

इत्युक्त्वा परुष वाक्य रावण रावणानुज ।
आजगाम मुहूर्तेन यत्र राम॰ सलक्ष्मण ॥
स उवाच महाप्राज्ञ॰ स्वरेण महता महान् ।
सुग्रीवं तांश्च संप्रेक्ष्य खस्थ एव विभीषण ॥
निवेदयत मां क्षिप्रं राघवाय महात्मने ।
सर्वलोकशरण्याय विभीषणमुपस्थितम ॥
एतत्तु वचनं श्रुत्वा सुग्रीवो लघुविक्रम. ।
लक्ष्मणस्याग्रतो रामं सरब्धमिदमब्रवीन् ॥
रावणस्यानुजो भ्राता विभीषण इति श्रुत ।
चतुर्भि॰ सह रक्षोभिर्भवन्त शरणं गतः ॥
रावणेन प्रणीतं हि तमवेहि विभीषणम ।
तस्याहं निग्रहं मन्ये क्षम क्षमवतां वर ॥
सुग्रीवस्य तु तद्वाक्यं श्रुत्वा रामो महाबल ।
समीपस्थानुवाचेद हनुमत्प्रमुखान्कपीन् ॥
यदुक्तं कपिराजेन रावणावरज प्रति ।
वाक्यं हेतुमदत्यर्थ भवद्भिरपि च श्रुतम ॥
मित्रभावेन संप्राप्तं न त्यजेय॰ कथचन ।
दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम ॥
आर्तो वा यदि वा दृप्त॰ परेषां शरण गतः ।
अरिः प्राणान्परित्यज्य रक्षितव्य॰ कृतात्मना ॥
करिष्यामि यथार्थं तु कण्डोर्वचनमुत्तमम ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥

आनयैनं हरिश्रेष्ठ दत्तमस्याभय मया ।
विभीषणो वा सुग्रीवो यदि वा रावण स्वयम् ॥
रामस्य तु वच श्रुत्वा सुग्रीव प्लवगेश्वर ।
प्रत्यभापत काकुत्स्थ सौहार्देनाभिपूरित ॥
किमत्र चित्र धर्मज्ञ लोकनाथ शिखामणे ।
यत्त्वमार्य प्रभापेथा सत्त्ववान्सत्पथे स्थित: ॥
मम चाप्यन्तरात्माय शुद्ध वेत्ति विभीषणम् ।
अनुमानाच्च भावाच्च सर्वत सुपरीक्षित ॥
तस्मात्क्षिप्रं सहास्माभिस्तुल्यो भवतु राघव ।
विभीषणो महाप्राज्ञ सखित्व चाभ्युपैतु न ॥
राघवेणाभये दत्ते संनतो रावणानुज ।
खात्पपातावनि हृष्टो भक्तैरनुचरै सह ।
पादयोर्निपपाताथ चतुर्भि: सह राक्षसै ।
अनुजो रावणस्याह तेन चास्म्यवमानित ॥
भवन्तं सर्वभूतानां शरण्यं शरणं गत ।
परित्यक्ता मया लङ्का मित्राणि च धनानि च ॥
भवद्गतं हि मे राज्य जीवित च सुखानि च ।
इति ब्रुवाणं रामस्तु परिष्वज्य विभीषणम् ।
अब्रवील्लक्ष्मणं प्रीत समुद्राज्जलमानय ॥
तेन चेम महाप्राज्ञमभिषिञ्च विभीषणम् ।
राजानं रक्षसां क्षिप्र प्रसन्ने मयि मानद ॥
एवमुक्तस्तु सौमित्रिरभ्यषिञ्चद्विभीषणम् ।

मध्ये वानरमुख्याना राजान राजशासनात् ॥
तं प्रासादं तु रामस्य दृष्ट्वा सद्य· प्लवंगमा ।
प्रचुक्रुशुर्महात्मान साधुसाध्विति चाब्रुवन् ॥
अब्रवीच्च हनूमांश्च सुग्रीवश्च विभीषणम् ।
कथ सागरमक्षोभ्यं तराम वरुणालयम् ॥
एवमुक्तस्तु धर्मात्मा प्रत्युवाच विभीषण. ।
समुद्रं राघवो राजा शरण गन्तुमर्हति ॥
अबद्ध्वा सागरे सेतुं घोरेऽस्मिन्वरुणालये ।
लङ्का नासादितुं शक्या सेन्द्रैरपि सुरासुरैः ॥
तत. सागरवेलाया दर्भानास्तीर्य राघव ।
अञ्जलिं प्राङ्मुख कृत्वा प्रतिशिश्ये महोदधेः ॥
स त्रिरात्रोपितस्तत्र नयज्ञो धर्मवत्सल ।
उपासत तदा राम· सागरं सरितां पतिम् ॥
न च दर्शयते रूपं मन्दो रामस्य सागर ।
प्रयतेनापि रामेण यथार्हमभिपूजितः ॥
समुद्रस्य ततः क्रुद्धो रामो रक्तान्तलोचन· ।
समीपस्थमुवाचेद लक्ष्मणं शुभलक्षणम् ॥
क्षमया हि समायुक्तं मामयं मकरालय· ॥
असमर्थं विजानाति धिक्क्षमामीदृशे जने ।
न दर्शयति साम्ना मे सागरो रूपमात्मन. ॥
चापमानय सौमित्रे शरांश्चाशीविषोपमान् ।
समुद्रं शोषयिष्यामि पद्भ्यां यान्तु प्लवंगमाः ॥

एवमुक्त्वा धनुष्पाणिः क्रोधविस्फारितेक्षणः ।
बभूव रामो दुर्धर्षो युगान्ताग्निरिव ज्वलन् ॥
ब्राह्मेणास्त्रेण संयोज्य ब्रह्मदण्डनिभं शरम् ।
संयोज्य धनुषि श्रेष्ठे विचकर्ष महाबलः ॥
तस्मिन्विकृष्टे सहसा राघवेण शरासने ।
रोदसी संपफालेव पर्वताश्च चकम्पिरे ॥
ततो मध्यात्समुद्रस्य सागरः स्वयमुत्थितः ।
अब्रवीत्प्राञ्जलिर्वाक्यं राघवं शरपाणिनम् ॥
विधास्ये येन गन्तासि विषहिष्येऽप्यहं तथा ।
न ग्राहा विधमिष्यन्ति यावत्सेना तरिष्यति ।
हरीणां तरणं राम करिष्यामि यथा स्थलम् ॥
अयं सौम्य नलो नाम तनयो विश्वकर्मणः ।
एष सेतुं महोत्साहः करोतु मयि वानरः ।
एवमुक्त्वोदधिर्नष्टः समुत्थाय नलस्ततः ।
अब्रवीद्वानरश्रेष्ठो वाक्यं रामं महाबलम् ॥
अहं सेतुं करिष्यामि विस्तीर्णे मकरालये ।
पितुः सामर्थ्यमासाद्य तत्त्वमाह महोदधिः ॥
समर्थश्चाप्यहं सेतुं कर्तुं वै वरुणालये ।
तस्मादद्यैव बध्नन्तु सेतुं वानरपुंगवाः ॥
ततो विसृष्टा रामेण सर्वतो हरिपुंगवाः ।
उत्पेतुर्महारण्यं हृष्टाः शतसहस्रशः ॥
हस्तिमात्रान्महाकाया पाषाणांश्च महाबलाः ।

पर्वताश्च समुत्पाट्य यन्त्रैः परिवहन्ति च ॥
शिलानां क्षिप्यमाणानां शैलानां तत्र पात्यनाम् ।
बभूव तुमुलः शब्दस्तदा तस्मिन्महोदधौ ॥
स वानरवरः श्रीमान्विश्वकर्मात्मजो बली ।
बबन्ध सागरे सेतुं यथा चास्य पिता तथा ॥
स नलेन कृतः सेतुः सागरे मकरालये ।
शुशुभे सुभगः श्रीमान्स्वातीपथ इवाम्बरे ॥
दशयोजनविस्तीर्णं शतयोजनमायतम् ।
ददृशुर्देवगन्धर्वा नलसेतुं सुदुष्करम् ॥
निमित्तानि निमित्तज्ञो दृष्ट्वा लक्ष्मणपूर्वजः ।
सौमित्रिं संपरिष्वज्य इदं वचनमब्रवीत् ॥
क्षिप्रमद्यैव दुर्धर्षां पुरीं रावणपालिताम् ।
अभियाम जवेनैव सर्वै हरिभिरावृताः ॥
इत्येवमुक्त्वा धन्वी स रामः सङ्ग्रामधर्षणः ।
प्रतस्थे पुरतो रामो लङ्कामभिमुखो विभुः ॥
सविभीषणसुग्रीवाः सर्वे ते वानरर्षभाः ।
प्रतस्थिरे विनर्दन्तो धृतानां द्विषतां वधे ॥
प्रगृह्य गिरिशृङ्गाणि महतश्च महीरुहान् ।
आसेदुर्वानरा लङ्कां सिमर्दयिषवो रणे ॥
सबले सागरे तीर्णे रामे दशरथात्मजे ।
अमात्यौ रावणः श्रीमानब्रवीच्छुकसारणौ ॥
समग्रं सागरं तीर्णं दुस्तरं वानरं बलम् ।

अभूतपूर्वं रामेण सागरे सेतुबन्धनम् ॥
अवश्य चापि सख्येयं तन्मया वानर बलम् ॥
निवेश च यथा तेषां वानराणां महात्मनाम् ॥
रामस्य व्यवसाय च वीर्य प्रहरणानि च ।
लक्ष्मणस्य चवीरस्य तत्त्वतो ज्ञातुमर्हथ. ॥
इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ।
हरिरूपधरौ वीरौ प्रविष्टौ वानर बलम् ॥
तौ ददर्श महातेजा· प्रतिच्छन्नौ विभीषण ।
आचचक्ष स रामाय गृहीत्वा शुकसारणौ ॥
तौ दृष्ट्वा व्यथितौ राम निराशौ जीविते तथा ।
कृताञ्जलिपुटौ भीतौ वचन चेदमूचतु· ॥
आवामिहागतौ सौम्य रावणप्रहितावुभौ ।
परिज्ञातुं बलं सर्व तदिदं रघुनन्दन ॥
तयोस्तद्वचनं श्रुत्वा रामो दशरथात्मज·
अब्रवीत्प्रहसन्वाक्यं सर्वभूतहिते रत. ॥
यदि दृष्टं बलं सर्व वयं वा सुसमाहिताः ।
यथोक्तं वा कृतं कार्यं छन्दत प्रतिगम्यताम् ॥
अथ किंचिददृष्टं वा भूयस्तद्द्रष्टुमर्हथः ।
विभीषणो वा कार्त्स्न्येन पुनः संदर्शयिष्यति ॥
प्रविश्य महती लङ्कां भवद्भ्यां धनदानुजः ।
वक्तव्यो रक्षसां राजा यथोक्तं वचनं मम ॥
श्वः काल्ये नगरी लङ्कां सप्राकारां सतोरणाम् ।

रक्षसां च बलं पश्य शरैर्विध्वसित मया ॥
क्रोधं भीममहं मोक्ष्ये ससैन्ये त्वयि रावण ।
इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ।
जयेति प्रतिनन्द्यैनं राघवं धर्मवत्सलम् ॥
आगम्य नगरीं लङ्कामब्रूतां राक्षसाधिपम् ।
तद्वचः सत्यमक्लीब सारणेनाभिभाषितम् ।
निशम्य रावणो राजा पर्यभाषत सारणम् ॥
यदि मामभियुञ्जीरन्देवगन्धर्वदानवाः ।
नैव सीतामहं दद्यां सर्वलोकभयादपि ॥
को हि नाम सपत्नो मां समरे जेतुमर्हति ।
ततः स मन्त्रयामास राक्षसैः सचिवैः सह ॥
मन्त्रयित्वा तु दुर्धर्षः क्षमं यत्तदनन्तरम् ।
ततो राक्षसमादाय विद्युज्जिह्वं महाबलम् ।
मायाविनं महामायं प्राविशद्यत्र मैथिली ॥
विद्युज्जिह्वं च मायाज्ञमब्रवीद्राक्षसाधिपः ।
मोहयिष्यावहे सीतां मायया जनकात्मजाम् ॥
शिरो मायामयं गृह्य राघवस्य निशाचर ।
मां त्वं समुपतिष्ठस्व महच्च सशरं धनुः ॥
एवमुक्तस्तथेत्याह विद्युज्जिह्वो निशाचरः ।
दर्शयामास तां मायां सुप्रयुक्तां स रावणः ॥
उपसृत्य ततः सीतां प्रहर्षं नाम कीर्तयन् ॥
इदं च वचनं धृष्टमुवाच जनकात्मजाम् ।

सान्त्व्यमाना मया भद्रे यमाश्रित्य विमन्यसे ॥
खरहन्ता स ते भर्ता राघवः समरे हतः
विसृजैतां मतिं मूढे किं मृतेन करिष्यसि ॥
भवस्व भद्रे भार्याणां सर्वासामीश्वरी मम ।
ततः परमदुर्धर्षो रावणो राक्षसेश्वरः ।
सीतायामुपशृण्वत्यां राक्षसीमिदमब्रवीत् ॥
राक्षसं क्रूरकर्माणं विद्युज्जिह्वं समानय ।
येन तद्राघवशिरः सङ्ग्रामात्स्वयमाहृतम् ॥
विद्युज्जिह्वस्तदागृह्य शिरस्तत्सशरासनम् ।
प्रणामं शिरसा कृत्वा रावणस्याग्रतः स्थितः ॥
अग्रतः कुरु सीतायाः शीघ्रं दाशरथेः शिरः ।
अवस्थां पश्चिमां भर्तुः कृपणां साधु पश्यतु ॥
एवमुक्तं तु तद्रक्षः शिरस्तत्प्रियदर्शनम् ।
उपनिक्षिप्य सीतायाः क्षिप्रमन्तरधीयत ॥
रावणश्चापि चिक्षेप भास्वरं कार्मुकं महत् ।
त्रिषु लोकेषु विख्यातं रामस्यैतदिति ब्रुवन् ॥
सा सीता तच्छिरो दृष्ट्वा तच्च कार्मुकमुत्तमम् ।
सुग्रीवप्रतिसंसर्गमाख्यानं च हनूमता ॥
सकामा भव कैकेयि हतोऽयं कुलनन्दनः ।
कुलमुत्सादितं सर्वं त्वया कलहशीलया ॥
आर्येण किं नु कैकेय्याः कृतं रामेण विप्रियम् ।
यन्मया चीरवसनं दत्वा प्रव्राजितो वनम् ॥

एवमुक्त्वा तु वैदेही वेपमाना तपस्विनी ।
जगाम जगतीं बाला छिन्ना तु कदली यथा ॥
सा मुहूर्तात्समाश्वस्य परिलभ्याथ चेतनाम् ।
तच्छिर समुपास्थाय विललापायतेक्षणा ॥
सीतां तु मोहितां दृष्ट्वा सरमा नाम राक्षसी ।
आससादाथ वैदेहीं प्रियां प्रणयिनी सखी ॥
सा ददर्श सखी सीतां सरमा नष्टचेतनाम् ।
ता समाश्वासयामास सखी स्नेहेन सुव्रताम ।
उक्ता यद्रावणेन त्व प्रत्युक्तश्च स्वयं त्वया ॥
अयुक्तबुद्धिकृत्येन सर्वभूतविरोधिना ।
इयं प्रयुक्ता रौद्रेण माया मायाविना त्वयि ॥
इति ब्रुवाणा सरमा राक्षसी सीतया सह ।
सर्वोद्योगेन सैन्यानां शब्दं शुश्राव भैरवम ॥
उवाच सरमा सीतामिदं मधुरभाषिणी ॥
संनाहजननी ह्येषा भैरवा भीरु भेरिका ।
भेरीनादं च गम्भीरं शृणु तोयदनिःस्वनम ॥
रामः कमलपत्राक्षो दैत्यानामिव वासवः ।
रावणं समरे हत्वा भर्ता त्वाधिगमिष्यति ॥
आगतस्य हि रामस्य क्षिप्रमङ्कगतां सतीम ।
अहं द्रक्ष्यामि सिद्धार्थां त्वां शत्रौ विनिपातिते ॥
एतस्मिन्नन्तरे शब्दो भेरी शङ्खसमाकुलः ।
श्रुतो वै सर्वसैन्यानां कम्पयन्धरणीतलम ॥

तं निदनाद निशम्याथ रावणो राक्षसेश्वर. ।
मुहूर्तं ध्यानमास्थाय सचिवानभ्युदैक्षत ॥
तूष्णींकानीक्षतोऽन्योन्य विदित्वा रामविक्रमम् ॥
ततस्तु सुमहाप्राज्ञो माल्यावान्नाम राक्षस ।
रावणस्य वचः श्रुत्वा इति मातामहोऽब्रवीन् ॥
हीयमानेन कर्तव्यो राज्ञा संधि समेन च ।
न शत्रुमवमन्येत ज्यायान्कुर्वीत विग्रहम ॥
तन्मह्यं रोचते संधिः सह रामेण रावण ।
यदर्थमभियुक्तोऽसि सीता तस्मै प्रदीयताम् ॥
तत्तु मल्यवतो वाक्यं हितमुक्तं दशानन. ।
न मर्षयति दुष्टात्मा कालस्य वशमागत. ॥
स बद्ध्वा भ्रुकुटिं वक्त्रे क्रोधस्य वशमागतः ।
अमर्षात्परिवृत्ताक्षो माल्यवन्तमथाब्रवीन् ॥
हितबुद्ध्या यदहितं वच· परुषमुच्यते ।
परपक्षं प्रविश्यैव नैतच्छ्रोत्रगतं मम ॥
मानुषं कृपणं राममेकं शाखामृगाश्रयम ।
समर्थं मन्यसे केन त्यक्तं पित्रा वनाश्रयम् ॥
वृतं वानरकोटीभिः ससुग्रीवं सलक्ष्मणम् ।
पश्य कैश्चिदहोभिश्च राघवं निहतं मया ॥
एवं ब्रुवाणं संरब्धं रुष्टं विज्ञाय रावणम् ।
माल्यवानभ्यनुज्ञातो जगाम स्वं निवेशनम ॥
रावणस्तुसहामात्यो मन्त्रयित्वा विमृश्य च ।

लङ्कायास्तु तदा गुप्तिं कारयामास राक्षस ॥
शासनेन तु रामस्य लक्ष्मणः सविभीषण ।
द्वारं द्वारं हरीणां तु कोटिं कोटिन्यवेशयत् ॥
पश्चिमेन तु रामस्य सुषेणः सहजाम्बवान् ।
अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः ॥
राघवः संनिवेश्यैव स्वसैन्यं रक्षसां वधे ।
समन्त्र्य मन्त्रिभिः सार्धं निश्चित्य च पुनःपुनः ॥
अङ्गदं वालितनयं ब्रूहि मद्वचनात्कपे ।
अराक्षसमिमं लोकं कर्तास्मि निशितैः शरैः ॥
न चेच्छरणमभ्येषि तामादाय तु मैथिलीम् ।
धर्मात्मा राक्षसश्रेष्ठः संप्राप्तोऽय विभीषणः ॥
लङ्कैश्वर्यमिद श्रीमान्ध्रुवं प्राप्नोत्यकण्टकम् ।
नहि राज्यमधर्मेण भोक्तुं क्षणमपि त्वया ॥
शक्यं मूर्खसहायेन पापेनाविदितात्मना ।
यद्याविशसि लोकांस्त्रीन्पक्षीभूतो निशाचर ॥
मम चक्षुःपथं प्राप्य न जीवन्प्रतियास्यसि ।
इत्युक्तः स तु तारेयो रामेणाक्लिष्टकर्मणा ॥
जगामाकाशमाविश्य मूर्तिमानिव हव्यवाट् ।
सोऽतिपत्य मुहूर्तेन श्रीमान्रावणमन्दिरम् ॥
ददर्शासीनमव्यग्रं रावणं सचिवैः सह ।
तद्रामवचनं सर्वमन्यूनाधिकमुत्तमम् ॥
सामात्यं श्रावयामास निवेद्यात्मानमात्मना ।

विभीषणस्य चैश्वर्यं भविष्यति हते त्वयि ॥
न चेत्सत्कृत्य वैदेहीं प्रणिपत्य प्रदास्यसि ।
इत्येवं परुषं वाक्यं ब्रुवाणे हरिपुंगवे ॥
अमर्षवशमापन्नो निशाचरगणेश्वरः ।
ततः स रोषमापन्नः शशास सचिवांस्तदा ॥
गृह्यतामिति दुर्मेधा वध्यतामिति चासकृत् ।
रावणस्य वचः श्रुत्वा दीप्ताग्निमिव तेजसा ॥
जगृहुस्त ततो घोराश्चत्वारो रजनीचराः ।
ग्राहयामास तारेयः स्वयमात्मानमात्मवान् ॥
बलं दर्शयितुं वीरो यातुधानगणे तदा ।
स तान्बाहुद्वयासक्तानादाय पतगानिव ॥
प्रासादं शैलसंकाशमुत्पपाताङ्गदस्तदा ।
तस्योत्पतनवेगेन निर्धूतास्तत्र राक्षसाः ॥
भूमौ निपतिताः सर्वे राक्षसेन्द्रस्य पश्यतः ।
भङ्क्त्वा प्रासादशिखरं नाम विश्राव्य चात्मनः ॥
विनद्य सुमहानादमुत्पपात विहायसा ।
ततस्ते राक्षसास्तत्र गत्वा रावणमन्दिरम् ॥
न्यवेदयन्पुरीं रुद्धां रामेण सह वानरैः ।
रुद्धां तु नगरीं श्रुत्वा जातक्रोधो निशाचरः ॥
विधानं द्विगुणं श्रुत्वा प्रासादं चाप्यरोहत ।
स ददर्शावृतां लङ्कां सशैलवनकाननाम् ॥
असंख्येयैर्हरिगणैः सर्वतो युद्धकाङ्क्षिभिः ।

ततः कोपपरीतात्मा रावणो राक्षसेश्वरः ॥
निर्याणं सर्वसैन्यानां द्रुतमाज्ञापयत्तदा ।
निष्पतन्ति ततः सैन्या हृष्टा रावणचोदिताः ॥
समये पूर्यमाणस्य वेगा इव महोदधेः ।
ततो वानरसैन्येन मुक्तो नादः समन्ततः ॥
पृथिवीं चान्तरिक्षं च सागरं चाभ्यनादयन् ।
एतस्मिन्नन्तरे घोरः संग्रामः समपद्यत ॥
रक्षसां वानराणां च यथा देवासुरे पुरा ।
युध्यतां तु ततस्तेषां वानराणां महात्मनाम् ॥
रक्षसां संबभूवाथ बलरोपः सुदारुणः ।
निर्ययू राक्षसा वीरा नादयन्तो दिशो दश ॥
राक्षसा भीमकर्माणो रावणस्य जयैषिणः ।
वानराणामपि चमूर्बृहती जयमिच्छताम् ॥
अभ्यधावत तां सेनां रक्षसां घोरकर्मणाम् ।
एतस्मिन्नन्तरे तेषामन्योन्यमभिधावताम् ॥
रक्षसां वानराणां च द्वन्द्वयुद्धमवर्तत ।
तत्रासीत्सुमहद्युद्धं तुमुलं रोमहर्षणम् ॥
रक्षसां वानराणां च वीराणां जयमिच्छताम् ।
युद्ध्यतामेव तेषां तु तदा वानररक्षसाम् ॥
रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणी ।
अन्योन्यं बद्धवैराणां घोराणां जयमिच्छताम् ॥
संप्रवृत्तं निशायुद्धं तदा वानररक्षसाम् ।

तस्मिंस्तमसि दुष्पारे राक्षसा क्रोधमूर्छिता ॥
परिपेतुर्महावेगा भक्षयन्त प्लवंगमान् ।
ते हयान्काञ्चनापीडान्ध्वजांश्चाशीविषोपमान् ॥
आप्लुत्य दशनैस्तीक्ष्णैर्भीमकोपा व्यदारयन ।
वर्तमाने तथा घोरे संग्रामे लोमहर्षणे ॥
रुधिरौघा महाघोरा नद्यस्तत्र विसुस्रुवु ।
सा बभूव निशा घोरा हरिराक्षसहारिणी ॥
कालरात्रीव भूतानां सर्वेषा दुरतिक्रमा ।
इन्द्रजित्तु रथं त्यक्त्वा हताश्वो हतसारथि ॥
अङ्गदेन महायस्तस्तत्रैवान्तरधीयत ।
तत. प्रहृष्टा. कपय ससुग्रीवविभीषणाः ॥
साधुसाध्विति नेदुश्च दृष्ट्वा शत्रुं पराजितम् ।
इन्द्रजित्तु तदानेन निर्जितो भीमकर्मणा ॥
संयुगे वालिपुत्रेण क्रोधं चक्रे सुदारुणम् ।
ब्रह्मदत्तवरो वीरो रावणिः क्रोधमूर्छित ॥
अदृश्यो निशितान्बाणान्मुमोचाशनिवर्चस ।
रामं च लक्ष्मणं चैव घोरैर्नागमयैः शरै ॥
बिभेद समरे क्रुद्धः सर्वगात्रेषु राघवौ ।
स तस्य गतिमन्विच्छन्राजपुत्र प्रतापवान् ।
दिदेशातिबलो रामो दश वानरयूथपान् ॥
ते संप्रहृष्टा हरयो भीमानुद्यम्य पादपान् ।
आकाशं विविशुः सर्वे मार्गमाणा दिशो दश ॥

त भीमवेगा हरयो नाराचैः क्षतविक्षताः ।
अन्धकारे न ददृशुर्मेघैः सूर्यमिवावृतम् ॥
रामलक्ष्मणयोरेव सर्वदेहभिदः शरान् ।
भृशमावेशयामास रावणिः समितिंजयः ॥
निरन्तरशरीरौ तु तावुभौ रामलक्ष्मणौ ।
क्रुद्धेनेन्द्रजिता वीरौ पन्नगैः शरतां गतैः ॥
तौ सम्प्रवलितौ वीरौ मर्मभेदेन कर्शितौ ।
निपेततुर्महेष्वासौ जगत्यां जगतीपती ॥
तौ वीरशयने वीरौ शयानौ मन्दचेष्टितौ ।
यूथपैः स्वैः परिवृतौ बाष्पव्याकुललोचनैः ॥
राघवौ पतितौ दृष्ट्वा शरजालसमन्वितौ ।
बभूवुर्व्यथिता सर्वे वानराः सविभीषणाः ॥
इन्द्रजित्त्वात्मनः कर्म तौ शयानौ समीक्ष्य च ।
उवाच परमप्रीतो हर्षयन्सर्वराक्षसान् ॥
दूषणस्य च हन्तारौ खरस्य च महाबलौ ।
सादितौ मामकैर्बाणैर्भ्रातरौ रामलक्ष्मणौ ॥
तान्वानरवरान्भित्त्वा शरैरग्निशिखोपमैः ।
ननाद बलवांस्तत्र महासत्त्वः स रावणिः ॥
तानर्दयित्वा बाणौघैस्त्रासयित्वा च वानरान् ।
प्रजहास महाबाहुर्वचनं चेदमब्रवीत् ॥
शरबन्धेन घोरेण मया बद्धौ चमूमुखे ।
सहितौ भ्रातरावेतौ निशामयत राक्षसाः ॥

एवमुक्तास्तु ते सर्वे राक्षसा कूटयोधिनः ।
परं विस्मयमापन्ना कर्मणा तेन हर्षिताः ॥
विनेदुश्च महानादान्सर्वे ते जलदोपमाः ।
हतो राम इति ज्ञात्वा रावणिं समपूजयन् ॥
निष्पन्दौ तु तदा दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
वसुधायां निरुच्छ्वासौ हतावित्यन्वमन्यत ॥
हर्षेण तु समाविष्ट इन्द्रजित्समितिंजयः ।
प्रविवेश पुरीं लङ्कां हर्षयन्सर्वनैरृतान् ॥
रामलक्ष्मणयोर्दृष्ट्वा शरीरे सायकैश्चिते ।
सर्वाणि चाङ्गोपाङ्गानि सुग्रीवं भयमाविशत् ॥
तमुवाच परित्रस्तं वानरेन्द्रं विभीषणः ।
स बाष्पवदनं दीनं क्रोधव्याकुललोचनम् ।
अलं त्रासेन सुग्रीव बाष्पवेगो निगृह्यताम् ॥
मोहमेतौ प्रहास्येते महात्मानौ महाबलौ ।
पर्यवस्थापयात्मानमनाथं मां च वानर ॥
सत्यधर्माभिरक्तानां नास्ति मृत्युकृतं भयम् ।
न कालः कपिराजेन्द्र वैक्लव्यमवलम्बितुम् ॥
अतिस्नेहोऽपि कालेऽस्मिन्मरणायोपकल्पते ॥
तस्मादुत्सृज्य वैक्लव्यं सर्वकार्यविनाशनम् ।
हितं रामपुरोगाणां सैन्यानामनुचिन्तय ॥
अथवा रक्ष्यतां रामो यावत्संज्ञाविपर्ययः ।
लब्धसंज्ञौ हि काकुत्स्थौ भयं नौ व्यपनेष्यतः ॥

तस्मादाश्वासयात्मानं बलं चाश्वासय स्वकम् ।
यावत्सैन्यानि सर्वाणि पुनः संस्थापयाम्यहम् ॥
समाश्वास्य तु सुग्रीवं राक्षसेन्द्रो विभीषणः ।
विद्रुतं वानरानीकं तत्समाश्वासयत्पुनः ॥
इन्द्रजित्तु महामायः सर्वसैन्यसमावृतः ।
विवेश नगरीं लङ्कां पितरं चाभ्युपागमत् ॥
तत्र रावणमासाद्य अभिवाद्य कृताञ्जलिः ।
आचचक्षे प्रियं पित्रे निहतौ रामलक्ष्मणौ ॥
उत्पपात ततो हृष्टः पुत्रं च परिषस्वजे ।
रावणो रक्षसां मध्ये श्रुत्वा शत्रू निपातितौ ॥
तस्मिन्प्रविष्टे लङ्कायां कृतार्थे रावणात्मजे ।
राघवं परिवार्याथ ररक्षुर्वानरर्षभाः ॥
वीक्षमाणा दिशः सर्वास्तिर्यगूर्ध्वं च वानराः ।
तृणेष्वपि च चेष्टत्सु राक्षसा इति मेनिरे ॥
एतस्मिन्नन्तरे रामः प्रत्यबुध्यत वीर्यवान् ।
स्थिरत्वात्सत्त्वयोगाच्च शरैः संदानितोऽपि सन् ॥
ततो दृष्ट्वा सरुधिरं निषण्णं गाढमर्पितम् ।
भ्रातरं दीनवदनं पर्यदेवयदातुरः ॥
किं नु मे सीतया कार्यं लब्धया जीवितेन वा ।
शयानं योऽद्य पश्यामि भ्रातरं युधि निर्जितम् ॥
किं नु वक्ष्यामि कौसल्यां मातरं किं नु कैकयीम् ।
कथमम्बां सुमित्रां च पुत्रदर्शनलालसाम् ॥

कथ वक्ष्यामि शत्रुघ्न भरत च यशस्विनम् ।
मया सह वनं यातो विना तेनाहमागतः ॥
त्व नित्य' सुविषण्णं मामाश्वासयसि लक्ष्मण ।
गतासुर्नाद्य शक्तोऽसि मामार्तमभिभाषितुम् ॥
यथैव मां वनं यान्तमनुयातो महाद्युति' ।
अहमप्यनुयास्यामि तथैवैनं यमक्षयम् ॥
अस्मिन्मुहूर्ते सुग्रीव प्रतियातुमिवार्हसि ।
अङ्गद तु पुरस्कृत्य ससैन्य' सपरिच्छदम् ॥
यत्तु शक्य' वयस्येन सुहृदा वा पर मम ।
कृत सुग्रीव तत्सर्व भवता धर्मभीरुणा ॥
मित्रकार्य कृतमिदं भवद्भिर्वानरर्षभा. ।
अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ ।
शुश्रुवुस्तस्य ते सर्वे वानरा. परिदेवितम् ॥
ततः सर्वाण्यनीकानि स्थापयित्वा विभीषणः ।
आजगाम गदापाणिस्त्वरितं यत्र राघवः ॥
विभीषणस्तु रामस्य दृष्ट्वा गात्रं शरैश्चितम् ।
लक्ष्मणस्य तु धर्मात्मा बभूव व्यथितस्तदा ॥
जलक्लिन्नेन हस्तेन तयोर्नेत्रे विमृज्य च ।
शोकसंपीडितमना रुरोद विललाप च ॥
ततो मुहूर्ताद्गरुडं वैनतेयं महाबलम् ।
वानरा ददृशुः सर्वे ज्वलन्तमिव पावकम् ॥
तमागतमभिप्रेक्ष्य नागास्ते विप्रदुद्रुवु' ।

येस्तु तौ पुरुषौ बद्धौ शरभूतैर्महाबलै. ॥

तत॰ सुपर्ण॰ काकुत्स्थौ स्पृष्ट्वा प्रत्यभिनन्द्य च ।

विममर्श च पाणिभ्यां मुखे चन्द्रसमप्रभे ॥

वैनतेयेन संस्पृष्टास्तयो संरुरुहुर्व्रणा ।

सुवर्णे च तनू स्निग्धे तयोराशु बभूवतु॰ ॥

प्रदक्षिणं तत कृत्वा परिष्वज्य च वीर्यवान ।

जगामाकाशमाविश्य सुपर्णः पवनो यथा ॥

नीरुजौ राघवौ दृष्ट्वा ततो वानरयूथपाः ।

सिंहनादं तदा नेदुर्लाङ्गूल दुधुवुश्च ते ॥

तेषां सुभीमस्तुमुलो निनादो बभूव शाखामृगयूथपानाम ।

क्षये निदाघस्य यथा घनानां नाद. सुभीमो नदता निशीथे ॥

तेषां तु तुमुल शब्द वानराणां महौजसाम ।

नर्दतां राक्षसैः सार्ध तदा शुश्राव रावणः ॥

सचिवानां ततस्तेषा मध्ये वचनमब्रवीत् ।

तौ तु बद्धौ शरैस्तीक्ष्णैर्भ्रातरौ रामलक्ष्मणौ ॥

अय॰ च सुमहान्नाद॰ शङ्कां जनयतीव मे ।

एवं च वचनं चोक्त्वा मन्त्रिणो राक्षसेश्वरः ।

उवाच नैर्ऋतांस्तत्र समीपपरिवर्तिनः ॥

ज्ञायतां तूर्णमेतेषां सर्वेषां च वनौकसाम् ।

शोककाले समुत्पन्ने हर्षकारणमुत्थितम ॥

तथोक्तास्ते सुसंभ्रान्ताः प्राकारमधिरुह्य च ।

ददृशुः पालितां सेनां सुग्रीवेण महात्मना ॥

तौ च मुक्तौ सुघोरेण शरबन्धेन राघवौ ।
समुत्थितौ महाभागौ विषेदुः सर्वराक्षसाः ॥
संत्रस्तहृदयाः सर्वे प्राकारादवरुह्य ते ।
विवर्णा राक्षसा घोरा राक्षसेन्द्रमुपस्थिताः ॥
तदप्रियं दीनमुखा रावणस्य च राक्षसाः ।
कृत्स्नं निवेदयामासुर्यथावद्वाक्य कोविदाः ॥
तच्छ्रुत्वा वचनं तेषां राक्षसेन्द्रो महाबलः ।
चिन्तारोपसमाक्रान्तो विवर्णवदनोऽभवत ॥
स प्रविश्य पुरीं लङ्कां रामबाणभयार्दितः ।
भग्नदर्पस्तदा राजा बभूव व्यथितेन्द्रियः ॥
मातंग इव सिंहेन गरुडेनेव पन्नगः ।
अभिभूतोऽभवद्राजा राघवेण महात्मना ॥
स काञ्चनमयं दिव्यमाश्रित्य परमासनम् ।
विप्रेक्षमाणो रक्षांसि रावणो वाक्यमब्रवीत् ॥
सर्वं तत्खलु मे मोघं यत्तप्तं परमं तपः ।
यत्समानो महेन्द्रेण मानुषेण विनिर्जितः ॥
इदं तद्ब्रह्मणो घोरं वाक्यं मामभ्युपस्थितम् ।
मानुषेभ्यो विजानीहि भयं त्वमिति तत्तथा ॥
देवदानवगन्धर्वैर्यक्षराक्षसपन्नगैः ।
अवध्यत्वं मया प्रोक्तं मानुषेभ्यो न याचितम् ॥
यथोक्तास्तन्मया प्राप्तं न मिथ्या ऋषिभाषितम् ।
एतदेव समागम्य यत्नं कर्तुमिहार्हथ ॥

समरे जितमात्मानं प्रहस्तं च निषूदितम् ॥
ज्ञात्वा रक्षो भीमबलमादिदेश महाबल. ।
निद्रावशसमाविष्ट. कुम्भकर्णो विबोध्यताम् ।
सुखं स्वपिति निश्चिन्त कामोपहतचेतन· ॥
ते तु तद्वचन श्रुत्वा राक्षसेन्द्रस्य राक्षसाः ।
जग्मु· परमसंभ्रान्ता कुम्भकर्णनिवेशनम ॥
तां प्रविश्य गुहां रम्यां रत्नकाञ्चनकुट्टिमाम ।
ददृशुर्नैरृतव्याघ्राः शयानं भीमविक्रमम ॥
तं तु त विकृत सुप्तं विकीर्णमिव पर्वतम् ।
कुम्भकर्णं महानिद्रं समेता. प्रत्यबोधयन् ॥
स जृम्भमाणोऽतिबल· प्रबुद्धस्तु निशाचरः ।
नि.श्वासश्वास्य संजज्ञे पर्वतादिव मारुत ॥
कुम्भकर्णस्यनि:श्वासादवधूतामहाबलाः ।
प्रतिष्ठमाना. कृच्छ्रेण यत्नात् प्रविविशुर्गुहाम ॥
ततस्त्वदर्शयन्सर्वान्भक्ष्यांश्च विविधान्बहून् ।
वराहान्महिषांश्चैव बभक्ष स महाबलः ॥
आददद्बुभुक्षितो मांसं शोणितं तृषितोऽपिबत् ।
मेद·कुम्भांश्च मद्यांश्च पपौ शक्ररिपुस्तदा ॥
ततस्तृप्त इति ज्ञात्वा समुत्पेतुर्निशाचराः ।
शिरोभिश्च प्रणम्यैनं सर्वत: पर्यवारयन् ॥
स सर्वान्सान्त्वयामास नैरृतान्नैरृतर्षभः ।
बोधनाद्विस्मितश्चापि राक्षसानिदमब्रवीत् ॥

किमर्थमहमादृत्य भवद्भिः प्रतिबोधितः ।
कच्चित्सुकुशलं राज्ञो भयं वा नेह किंचन ॥
अथवा ध्रुवमन्येभ्यो भयं परमुपस्थितम् ।
यदर्थमेव त्वरितैर्भवद्भिः प्रतिबोधितः ॥
नह्यल्पकारणे सुप्तं बोधयिष्यति मादृशम् ।
तदाख्यातार्थतत्त्वेन मत्प्रबोधनकारणम् ॥
एवं ब्रुवाणं संरब्धं कुम्भकर्णमरिंदमम् ।
यूपाक्षः सचिवो राज्ञः कृताञ्जलिरभाषत ॥
न नो देवकृतं किंचिद्भयमस्ति कदाचन ।
मानुषान्नो भयं राजस्तुमुलं संप्रबाधते ॥
वानरैः पर्वताकारैर्लङ्केयं परिवारिता ।
सीताहरणसंतप्ताद्रामान्नस्तुमुलं भयम् ॥
एकेन वानरेणेयं पूर्वं दग्धा महापुरी ।
कुमारो निहतश्चाक्षः सानुयात्रः सकुञ्जरः ॥
स्वयं रक्षोधिपश्चापि पौलस्त्यो देवकण्टकः ।
व्रजेति संयुगे मुक्तो रामेणादित्यवर्चसा ॥
स यूपाक्षवचः श्रुत्वा भ्रातुर्युधि पराभवम् ।
कुम्भकर्णो विवृत्ताक्षो यूपाक्षमिदमब्रवीत् ॥
सर्वमद्यैव यूपाक्ष हरिसैन्यं सलक्ष्मणम् ।
राघवं च रणे जित्वा ततो द्रक्ष्यामि रावणम् ॥
राक्षसांस्तर्पयिष्यामि हरीणां मांसशोणितैः ।
रामलक्ष्मणयोश्चापि स्वयं पास्यामि शोणितम् ॥

तत्तस्य वाक्यं ब्रुवतो निशम्य सगर्वितं रोषविवृद्धदोषम् ॥
महोदरो नैर्ऋतयोधमुख्य: कृताञ्जलिर्वाक्यमिदं बभाषे ॥

रावणस्य वच: श्रुत्वा गुणदोषौ विमृश्य च ।
पश्चादपि महाबाहो शत्रून्युधि विजेष्यसि ॥
महोदरवच: श्रुत्वा राक्षसै: परिवारित: ।
कुम्भकर्णो महातेजा: संप्रतस्थे महाबल: ॥
भ्रातु: स भवनं गत्वा रक्षोगणसमन्वित: ।
कुम्भकर्ण: पदन्यासैरकम्पयत मेदिनीम् ॥
अथ दृष्ट्वा दशग्रीव: कुम्भकर्णमुपस्थितम् ।
तूर्णमुत्थाय संहृष्ट: संनिकर्षमुपानयत् ॥
अथासीनस्य पर्यङ्के कुम्भकर्णो महाबल: ।
भ्रातुर्ववन्दे चरणौ किं कृत्यमिति चाब्रवीत् ॥
शंस कस्माद्भयं तेऽत्र को वा प्रेतो भविष्यति ।
भ्रातरं रावण: क्रुद्धं कुम्भकर्णमवस्थितम् ॥
रोषेण परिवृत्ताभ्यां नेत्राभ्यां वाक्यमब्रवीत् ॥
अयं ते सुमहान्काल: शयानस्य महाबल ।
सुषुप्तस्त्वं न जानीषे मम रामकृतं भयम् ॥
एष दाशरथि: श्रीमान्सुग्रीवसहितो बली ।
समुद्रं लङ्घयित्वा तु कुलं न: परिकृन्तति ॥
तदेतद्भयमुत्पन्नं त्रायस्वेह महाबल ।
नाशय त्वमिमानद्य तदर्थं बोधितो भवान् ॥
तस्य राक्षसराजस्य निशम्य परिदेवितम् ।

कुम्भकर्णो बभाषेद वचनं प्रजहास च ॥
दृष्टो दोषो हि योऽस्माभिः पुरा मन्त्रविनिर्णये ।
हितेष्वनभियुक्तेन सोऽयमासादितस्त्वया ॥
शीघ्रं खल्वभ्युपेत त्वां फलं पापस्य कर्मणः ।
निरयेष्वेव पतनं यथा दुष्कृतकर्मण ॥
प्रथमं वै महाराज कृत्यमेतदचिन्तितम्
केवलं वीर्यदर्पेण नानुबन्धो विचारित ॥
यो हि शत्रुमवज्ञाय आत्मानं नाभिरक्षति ।
अवाप्नोति हि सोऽनर्थान्स्थानाच्च व्यवरोप्यते ॥
यदुक्तमिह ते पूर्वं प्रियया मेऽनुजेन च ।
तदेव नो हितं वाक्यं यथेच्छसि तथा कुरु ॥
तत्तु श्रुत्वा दशग्रीवः कुम्भकर्णस्य भाषितम् ।
भ्रुकुटिं चैव संचक्रे क्रुद्धश्चैनमभाषत ॥
मान्यो गुरुरिवाचार्यः किं मां त्वमनुशाससि ।
किमेवं वाक्श्रमं कृत्वा यद्युक्तं तद्विधीयताम् ॥
विभ्रमाच्चित्तमोहाद्वा बलवीर्याश्रयेण वा ।
नाभिपन्नमिदानीं यद्व्यर्था तस्य पुनः कथा ॥
अतीव हि समालक्ष्य भ्रातरं क्षुभितेन्द्रियम् ।
कुम्भकर्णः शनैर्वाक्यं बभाषे परिसान्त्वयन् ॥
शृणु राजन्नवहितो मम वाक्यमरिंदम ।
अलं राक्षसराजेन्द्र संतापमुपपद्यते ।
रोषं च संपरित्यज्य स्वस्थो भवितुमर्हसि ॥

नैतन्मनसि कर्तव्यं मयि जीवति पार्थिव ।
तमहं नाशयिष्यामि यत्कृते परितप्यते ॥
अवश्यं च हितं वाच्यं सर्वावस्थां गतं मया ।
बन्धुभावादभिहितं भ्रातृस्नेहाच्च पार्थिव ॥
सदृशं यच्च कालेऽस्मिन्कर्तुं स्नेहेन बन्धुना ।
शत्रूणां कदनं पश्य क्रियमाणं मया रणे ॥
अद्य पश्य महाबाहो मया समरमूर्धनि ।
हते रामे सह भ्रात्रा द्रवन्तीं हरिवाहिनीम् ॥
राघवं लक्ष्मणं चैव सुग्रीवं च महाबलम् ।
हनूमन्तं च रक्षोघ्नं येन लङ्का प्रदीपिता ॥
हरींश्च भक्षयिष्यामि संयुगे समुपस्थिते ।
असाधारणमिच्छामि तव दातुं महद्यशः ॥
भ्रातरं संपरिष्वज्य कृत्वा चापि प्रदक्षिणम् ।
प्रणम्य शिरसा तस्मै प्रतस्थे स महाबलः ॥
तं गजैश्च तुरङ्गैश्च स्यन्दनैश्चाम्बुदस्वनैः ।
अनुजग्मुर्महात्मानो रथिनो रथिनां वरम् ॥
स लङ्घयित्वा प्राकारं गिरिकूटोपमो महान् ।
निर्ययौ नगरात्तूर्णं कुम्भकर्णो महाबलः ॥
तमवध्यं मघवता यमेन वरुणेन वा ।
प्रेक्ष्य भीमाक्षमायान्तं वानरा विप्रदुद्रुवुः ॥
तांस्तुविप्रद्रुतान् दृष्ट्वा राजपुत्रोऽङ्गदोऽब्रवीत् ।
आत्मनस्तानि विस्मृत्य वीर्याण्यभिजनानिच ॥

क्वगच्छत भयत्रस्ता प्राकृताहरयो यथा ।
कृच्छ्रेण तु समाश्वस्य संगम्यच ततस्तत ॥
वृक्षान् गृहीत्वा हरय संप्रतस्थू रणाजिरे ।
ते निवर्त्य तु संरब्धाः कुम्भकर्ण वनौकस ।
निर्जघ्नुः परमक्रुद्धा समदा इव कुञ्जराः ॥
सोऽपि सैन्यानि संक्रुद्धो वानराणां महौजसाम ।
ममन्थ परमायत्तो वनान्यग्निरिवोत्थित ॥
लोहिताद्रास्तु बहवः शेरते वानरर्षभाः ॥
निरस्ता. पतिता भूमौ ताम्रपुष्पादवद्रुमा ।
केचित् समुद्रे पतिता. केचिद्गगनमास्थिता ॥
सागर येन ते तीर्णा पथातेनैवदुद्रुवु ।
तान्समीक्ष्याङ्गदो भग्नान्वानरानिदमब्रवीन ।
अवतिष्ठत युध्यामो निवर्तध्वं प्लवंगमा ॥
भग्नानां वो न पश्यामि परिक्रम्य महीमिमाम् ।
स्थानं सर्वे निवर्तध्वं किं प्राणान्परिरक्षथ ॥
शयामहे वा निहताः पृथिव्यामल्पजीविताः ।
अवाप्नुयामः कीर्तिं वा निहत्वा शत्रुमाहवे ॥
ते निवृत्ता महाकायाः श्रुत्वाङ्गदवचस्तदा ।
नैष्ठिकीं बुद्धिमास्थाय सर्वे संग्रामकाङ्क्षिण ॥
प्रयाताश्च गता हर्षं मरणे कृतनिश्चया ।
चक्रुः सुतुमुलं युद्धं वानरास्त्यक्तजीविता ॥
ततस्तेवध्यमानास्तुहतयूथाःप्लवंगमा ॥

राघवं शरणं जग्मु र्व्यथिता भिन्नचेतस ।
प्रभग्नान वानरान दृष्ट्वा वज्रहस्तात्मजात्मजः ॥
चिक्षेप शैलशिखरं कुम्भकर्णस्य मूर्धनि ।
कुम्भकर्णः प्रजज्वाल क्रोधेन महता तदा ॥
शूलं ससर्ज वै रोषादगदं तु महाबलः ।
तस्मिन् प्लवगशार्दूले विसंज्ञे पतिते भुवि ॥
तच्छूलं समुपादाय सुग्रीवमभिदुद्रुवे ।
तमापतन्तं संप्रेक्ष्य कुम्भकर्णं महाबलम् ।
उत्पपात तदा वीरः सुग्रीवो वानराधिपः ॥
स पर्वताग्रमुत्क्षिप्य समाविध्य महाबलः ।
अभिदुद्राव वेगेन कुम्भकर्णं महाबलम् ॥
तमापतन्तं संप्रेक्ष्य कुम्भकर्णः प्लवंगमम् ।
तस्थौ विवृत्तसर्वाङ्गो वानरेन्द्रस्य संमुखः ॥
एकं द्वौ त्रीन्बहून्क्रुद्धो वानरान्सह राक्षसैः ।
समादायैकहस्तेन प्रचिक्षेप त्वरन्मुखे ॥
सम्प्रस्रवत्तदा मेदः शोणितं च महाबलः ।
वध्यमानो नगेन्द्राग्रैर्भक्षयामास वानरान् ॥
ते भक्ष्यमाणा हरयो रामं जग्मुस्तदा गतिम् ।
कुम्भकर्णो भृशं क्रुद्धः कपीन्खादन्प्रधावति ॥
अथ दाशरथी रामो रौद्रमस्त्रं प्रयोजयन् ।
कुम्भकर्णस्य हृदये ससर्ज निशिताञ्शरान् ॥
रामास्त्रविद्धो घोरं वै नर्दन्राक्षसपुंगवः ।

अभ्यधावत तं क्रुद्धो हरीन्विद्रावयन्रणे ॥
तस्योरसि निमग्नास्ते शरा बर्हिणवाससः ।
हस्ताच्चास्य परिभ्रष्टा गदा चोर्व्यां पपात ह ॥
स बाणैरतिविद्धाङ्गः क्षतजेन समुक्षितः ।
रुधिरं परिसुस्राव गिरिः प्रस्रवणं यथा ॥
स तीव्रेण च कोपेन रुधिरेण च मूर्च्छितः ।
वानरान्राक्षसानृक्षान्खादन्स परिधावति ॥
अथ शृङ्गं समाविध्य भीमं भीमपराक्रमः ।
चिक्षेप राममुद्दिश्य बलवानन्तकोपमः ॥
ततस्तु रामो धर्मात्मा तस्य शृङ्गं महत्तदा ।
शरैः काञ्चनचित्राङ्गैश्चिच्छेद भरताग्रजः ॥
वायव्यमादाय ततोऽपरास्त्रं रामः प्रचिक्षेप निशाचराय ।
समुद्गरं तेन जहार बाहुं सकृत्तबाहुस्तुमुलं ननाद ॥
स कुम्भकर्णोऽस्त्रनिकृत्तबाहुर्महासिकृत्ताग्र इवाचलेन्द्रः ।
उत्पाटयामास करेण वृक्षं ततोऽभिदुद्राव रणे नरेन्द्रम् ॥
तं छिन्नबाहुं समवेक्ष्य रामः समापतन्तं सहसा नदन्तम् ।
द्वावर्धचन्द्रौ निशितौ प्रगृह्य चिच्छेद पादौ युधि राक्षसस्य ॥
दुद्राव रामं सहसाभिगर्जन्राहुर्यथा चन्द्रमिवान्तरिक्षे ॥
चकर्त रक्षोधिपतेः शिरस्तदा यथैव वृत्रस्य पुरा पुरंदरः ॥
तस्मिन्हते ब्राह्मणदेवशत्रौ महाबले संयति कुम्भकर्णे ।
चचाल भूर्भूमिधराश्च सर्वे हर्षाच्च देवास्तुमुलं प्रणेदुः ॥
कुम्भकर्णं हतं दृष्ट्वा राघवेण महात्मना ।

राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥
श्रुत्वा विनिहतं सङ्ख्ये कुम्भकर्णं महाबलम् ।
रावणः शोकसंतप्तो मुमोह च पपात च ॥
ततः कृच्छ्रात्समासाद्य संज्ञां राक्षसपुंगवः ।
कुम्भकर्णवधाद्दीनो विललापाकुलेन्द्रियः ॥
हा वीर रिपुदर्पघ्न कुम्भकर्ण महाबल ।
त्वं मां विहाय वै दैवाद्यातोऽसि यमसादनम् ॥
इदानीं खल्वहं नास्मि यस्य मे पतितो भुजः ।
दक्षिणोऽयं समाश्रित्य न बिभेमि सुरासुरान् ॥
एवं विलपमानस्य रावणस्य दुरात्मनः ।
श्रुत्वा शोकाभिभूतस्य त्रिशिरा वाक्यमब्रवीत् ॥
नूनं त्रिभुवनस्यापि पर्याप्तस्त्वमसि प्रभो ।
स कस्मात्प्राकृत इव शोचस्यात्मानमीदृशम् ॥
कामं तिष्ठ महाराज निर्गमिष्याम्यहं रणे ।
उद्धरिष्यामि ते शत्रून्गरुडः पन्नगानिव ॥
श्रुत्वा त्रिशिरसो वाक्यं रावणो राक्षसाधिपः ।
पुनर्जातमिवात्मानं मन्यते कालचोदितः ॥
ततोऽहमहमित्येव गर्जन्तो नैर्ऋतर्षभाः ।
रावणस्य सुता वीराः शक्रतुल्यपराक्रमाः ॥
स पुत्रान्संपरिष्वज्य भूषयित्वा च भूषणैः ।
आशीर्भिश्च प्रशस्ताभिः प्रेषयामास वै रणे ॥
तेऽभिवाद्य महात्मानं रावणं लोकरावणम् ।

कृत्वा प्रदक्षिणं चैव महाकाया. प्रतस्थिरे ॥
स रराज रथे तस्मिन्राजसूनुर्महाबल ।
मरणं वापि निश्चित्य शत्रूणां वा पराजयम् ॥
इति कृत्वा मतिं वीराः संजग्मु संयुगार्थिन ।
जगर्जुश्च प्रणदुश्च चिक्षिपुश्चापि सायकान ॥
ददृशुर्वानरानीकं समुद्यतशिलानगम ।
हरयोऽपि महात्मानो ददृशू राक्षसं बलम् ॥
तत. शैलैश्च खड्गैश्च विसृष्टैर्हरिराक्षसै· ।
मुहूर्तेनावृता भूमिरभवच्छोणितोक्षिता ॥
विकीर्णैं पर्वताकारै रक्षोभिरभिमर्दितै. ।
आसीद्वसुमती पूर्णा तदा युद्धमदान्वितै· ॥
वानरान्वानरैरेव जघ्नुस्ते नैऋ तर्षभा ।
राक्षसान्राक्षसैरेव जघ्नुस्ते वानरा अपि ॥
आक्षिप्य च शिलाः शैलाञ्जघ्नुस्ते राक्षसास्तदा ।
तेषां चाच्छिद्य शस्त्राणि जघ्नू रक्षांसि वानराः ॥
निर्जघ्नुः शैलशृङ्गैश्च बिभिदुश्च परस्परम ।
सिंहनादान्विनेदुश्च रणे राक्षसवानराः ॥
छिन्नवर्मतनुत्राणा राक्षसा वानरैर्हताः ।
रुधिरं प्रस्रुतास्तत्र रससारमिव द्रुमाः ॥
अथाङ्गदो मृत्युसमानवेगं संवर्त्य मुष्टिं गिरिशृङ्गकल्पम् ।
निपातयामास तदा महात्मा नरान्तकस्योरसि वालिपुत्रः ॥
स मुष्टिनिर्भिन्ननिमग्नवक्षा ज्वाला वमञ्शोणितदिग्धगात्रः ।

नरान्तको भूमितले पपात यथाचलो वज्रनिपातभग्न ॥
नरान्तकं हतं दृष्ट्वा चुक्रुशुर्नैऋर्तर्षभाः ।
देवान्तकस्त्रिमूर्धा च पौलस्त्यश्च महोदरः ॥
पितृव्यं निहतं दृष्ट्वा त्रिशिराश्चापमाददे ।
हनूमन्तं च सक्रुद्धो विव्याध निशितैः शरैः ॥
खड्गप्रहाराभिहतो हनूमान्मारुतात्मजः ।
आजघान त्रिमूर्धानं तलेनोरसि वीर्यवान् ॥
स तलाभिहतस्तेन स्रस्तहस्ताम्बरो भुवि ।
निपपात महातेजास्त्रिशिरास्त्यक्तचेतनः ॥
हतं त्रिशिरसं दृष्ट्वा युद्धोन्मत्तं तथैव च ।
हतौ प्रेक्ष्य दुराधर्षौ देवान्तकनरान्तकौ ॥
चुकोप परमामर्षी मत्तो राक्षसपुंगवः ।
जग्राहार्चिष्मतीं चापि गदां सर्वायसीं तदा ॥
अभिदुद्राव वेगेन गदां तस्य महात्मनः ।
तां गृहीत्वा गदां भीमामाविध्य च पुनःपुनः ॥
निपपात तदा मत्तो वज्राहत इवाचलः ।
विशीर्णनयनो भूमौ गतसत्त्वो गतायुषः ।
पतिते राक्षसे तस्मिन्विद्रुतं राक्षसं बलम् ॥
स्वबलं व्यथितं दृष्ट्वा तुमुलं लोमहर्षणम् ।
भ्रातॄंश्च निहतान्दृष्ट्वा शक्रतुल्यपराक्रमान् ॥
पितृव्यौ चापि संदृश्य समरे संनिपातितौ ।
युद्धोन्मत्तं च मत्तं च भ्रातरौ राक्षसोत्तमौ ॥

चुकोप च महातेजा ब्रह्मदत्तवरो युधि ।
अतिकायोऽद्रिसंकाशो देवदानवदर्पहा ॥
स भास्करसहस्रस्य संघातमिव भास्वरम् ।
रथमारुह्य शक्रारिरभिदुद्राव वानरान् ॥
ततोऽतिकायं काकुत्स्थो रथस्थं पर्वतोपमम् ।
ददर्श धन्विनं दूराद्गर्जन्तं कालमेघवत् ॥
स तं दृष्ट्वा महाकाय राघवस्तु सुविस्मितः ।
वानरान्सान्त्वयित्वा च विभीषणमुवाच ह ॥
कोऽसौ पर्वतसंकाशो धनुष्मान्हरिलोचन ।
युक्ते हयसहस्रेण विशाले स्यन्दने स्थितः ॥
स पृष्टो राजपुत्रेण रामेणामिततेजसा ।
आचचक्षे महातेजा राघवाय विभीषण ॥
एषोऽतिकायो बलवान्राक्षसानामथर्षभ ।
स रावणसुतो धीमान्देवदानवदर्पहा ॥

स राक्षसेन्द्रो हरियूथमध्ये नायुध्यमानं निजघान कंचित् ।
उत्पत्य रामं सधनुःकलापी सगर्वितं वाक्यमिदं बभाषे ॥
रथे स्थितोऽहं शरचापपाणिर्न प्राकृतं कंचन योधयामि ।
यस्यास्ति शक्तिर्व्यवसाययुक्तो ददातु मे शीघ्रमिहाद्य युद्धम् ॥

क्रुद्धः सौमित्रिरुत्पत्य तूणादाक्षिप्य सायकम् ।
पुरस्तादतिकायस्य विचकर्ष महद्धनु ॥
सौमित्रेश्चापनिर्घोषं श्रुत्वा प्रतिभयं तदा ।
विसिस्मिये महातेजा राक्षसेन्द्रात्मजो बली ॥

तदातिकाय. कुपितो दृष्ट्वा लक्ष्मणमुत्थितम ।
आदाय निशित बाणमिदं वचनमब्रवीत् ॥
बालस्त्वमसि सौमित्रे विक्रमेष्वविचक्षणः ।
गच्छ किं कालसकाश मां योधयितुमिच्छसि ॥
इत्येवमुक्त्वा संक्रुद्ध· शर धनुषि संदधे ॥

श्रुत्वातिकायस्य वच सरोष सगर्वितं सयति राजपुत्र ।
स संचुकोपातिबलो मनस्वी उवाच वाक्य च ततो बृहच्छ्री· ॥

कर्मणा सूचयात्मानं न विकत्थितुमर्हसि ।
पौरुषेण तु यो युक्त· स तु शूर इति स्मृत ॥
बालोऽयमिति विज्ञाय न चावज्ञातुमर्हसि ।
बालो वा यदि वा वृद्धो मृत्युं जानीहि संयुगे ॥
ततोऽतिकायः कुपितश्चापमारोप्य सायकम ।
लक्ष्मणाय प्रचिक्षेप संक्षिपन्निव चाम्बरम ॥
तमापतन्तं निशितं शरमाशीविषोपमम ।
अर्धचन्द्रेण चिच्छेद लक्ष्मणः परवीरहा ॥
तं निकृत्तं शरं दृष्ट्वा कृत्तभोगमिवोरगम ।
अतिकायो भृशं क्रुद्ध पञ्च बाणान्समादधे ॥
स ताञ्छित्त्वा शितैर्बाणैर्लक्ष्मणः परवीरहा ।
आददे निशितं बाणं ज्वलन्तमिव तेजसा ॥
तदस्त्रं ज्वलितं घोरं लक्ष्मण· शरमाहितम ।
अतिकायाय चिक्षेप कालदण्डमिवान्तक ॥

तान्यायुधान्यद्भुतविग्रहाणि मोघानि कृत्वा स शरोऽग्निदीप्तः ।

प्रगृह्य तस्यैव किरीटजुष्टं तदातिकायस्य शिरो जहार ॥

तच्छिरः सशिरस्त्राणं लक्ष्मणेषुप्रमर्दितम् ।
पपात सहसा भूमौ शृङ्गं हिमवतो यथा ॥
तं भूमौ पतितं दृष्ट्वा विक्षिप्ताम्बरभूषणम् ।
बभूवुर्व्यथिताः सर्वे हतशेषा निशाचराः ॥
अतिकायं हतं श्रुत्वा लक्ष्मणेन महात्मना ।
उद्वेगमगमद्राजा वचनं चेदमब्रवीत् ॥
धूम्राक्षः परमामर्षी सर्वशस्त्रभृतांवरः ।
अकम्पनः प्रहस्तश्च कुम्भकर्णस्तथैव च ॥
एते महाबला वीरा राक्षसा युद्धकाङ्क्षिणः ।
जेतारः परसैन्यानां परैर्नित्यापराजिताः ॥
ससैन्यास्ते हता वीरा रामेणाक्लिष्टकर्मणा ।
राक्षसाः सुमहाकाया नानाशस्त्रविशारदाः ॥

ततस्तु राजानमुदीक्ष्य दीनं शोकार्णवे संपरिपुप्लुवानम् ।
रथर्षभो राक्षसराजसूनुस्तमिन्द्रजिद्वाक्यमिदं बभाषे ॥
न तात मोहं परिगन्तुमर्हसे यत्रेन्द्रजिज्जीवति नैर्ऋतेश ।
नेन्द्रारिबाणाभिहतो हि कश्चित्प्राणान्समर्थः समरेऽभिपातुम् ॥
पश्याद्य रामं सह लक्ष्मणेन मद्बाणनिर्भिन्नविकीर्णदेहम् ।
गतायुषं भूमितले शयानं शितैः शरैराचितसर्वगात्रम् ॥

समास्थाय महातेजा रथं हरिरथोपमम् ।
जगाम सहसा तत्र यत्र युद्धमरिंदम ॥
इन्द्रजित्तु तदा क्रुद्धो महातेजा महाबलः ।

वानराणां शरीराणि व्यधमद्रावणात्मजः ॥
शरेणैकेन च हरीन्नव पञ्च च सप्त च ।
बिभेद समरे क्रुद्धो राक्षसान्संप्रहर्षयन् ॥
स्वसैन्यमुत्सृज्य समेत्य तूर्णं महाहवे वानरवाहिनीषु ।
अदृश्यमानः शरजालमुग्रं ववर्ष नीलाम्बुधरो यथाम्बु ॥
समीक्षमाणः परमाद्भुतश्री रामस्तदा लक्ष्मणमित्युवाच ।
असौ पुनर्लक्ष्मण राक्षसेन्द्रो महास्त्रमाश्रित्य सुरेन्द्रशत्रुः ॥
निपातयित्वा हरिसैन्यमस्मांछितैः शरैरर्दयति प्रसक्तम् ॥
स्वयंभुवा दत्तवरो महात्मा समाहितोऽन्तर्हितभीमकायः ।
कथं नु शक्यो युधि नष्टदेहो निहन्तुमद्येन्द्रजिदुद्यतास्त्रः ॥
एतच्च सर्वं पतिताग्र्यशूरं न भ्राजते वानरराजसैन्यम् ।
आवां तु दृष्ट्वा पतितौ विसंज्ञौ निवृत्तयुद्धौ हतहर्षरोषौ ।
ततस्तु ताविन्द्रजितोऽस्त्रजालैर्बभूवतुस्तत्र तदा विशस्तौ ।
स चापि तौ तत्र विषादयित्वा ननाद हर्षाद्युधि राक्षसेन्द्रः ॥
ततस्तदा वानरसैन्यमेवं रामं च संख्ये सह लक्ष्मणेन ।
निषूदयित्वा सहसा विवेश पुरीं दशग्रीवभुजाभिगुप्ताम् ।
तयोस्तदासादितयो रणाग्रे मुमोह सैन्यं हरियूथपानाम् ।
सुग्रीवनीलाङ्गदजाम्बवन्तो न चापि किंचित्प्रतिपेदिरे ते ॥
ततोऽब्रवीन्महातेजा हनूमंतं स जाम्बवान् ।
आगच्छ हरिशार्दूल वानरांस्त्रातुमर्हसि ॥
ऋक्षवानरवीराणामनीकानि प्रहर्षय ।
विशल्यौ कुरु चाप्येतौ सादितौ रामलक्ष्मणौ ॥

गत्वा परममध्वानमुपर्युपरि सागरम् ।
हिमवन्त नगश्रेष्ठ हनूमन्गन्तुमर्हसि ॥
ततः काञ्चनमत्युग्रमृषभं पर्वतोत्तमम् ।
कैलासशिखर चात्र द्रक्ष्यस्यरिनिपूदन ॥
तयोः शिखरयोर्मध्ये प्रदीप्तमतुलप्रभम् ।
सर्वौषधियुत वीर द्रक्ष्यस्योषधिपर्वतम् ॥
तस्य वानरशार्दूल चतस्रो मूर्ध्नि संभवाः ।
द्रक्ष्यस्योषधयो दीप्ता दीपयन्तीर्दिशो दश ॥
मृतसंजीवनीं चैव विशल्यकरणीमपि ।
सुवर्णकरणी चैव सधानी च महौषधीम् ॥
ताः सर्वा हनुमन्गृह्य क्षिप्रमागन्तुमर्हसि ।
आश्वासय हरीन्प्राणैर्योज्य गन्धवहात्मज ॥
श्रुत्वा जाम्ववतो वाक्यं हनूमान्मारुतात्मजः ।
आदित्यपथमाश्रित्य जगाम स गतश्रम ।
हनूमांस्त्वरितो वीरः पितुस्तुल्यपराक्रमः ॥
स योजनसहस्राणि समतीत्य महाकपि ।
दिव्यौषधिधरं शैलं व्यचरन्मारुतात्मज ॥
महौषध्यस्तत सर्वास्तस्मिन्पर्वतसत्तमे ।
विज्ञायार्थिनमायान्तं ततो जग्मुरदर्शनम् ॥

स तस्य शृङ्गं सनगं सनागं सकाञ्चनं धातुसहस्रजुष्टम् ।
विकीर्णकूटं ज्वलिताग्रसानुं प्रगृह्य वेगात्सहसोन्ममाथ ॥
स तं समुत्पाट्य खमुत्पपात वित्रास्य लोकान्ससुरान्सुरेन्द्रान् ।

संस्तूयमानः खचरैरनेकैर्जगाम वेगाद्गरुडोग्रवेगः ॥

ततो महात्मा निपपात तस्मिञ्शैलोत्तमे वानरसैन्यमध्ये ।
हर्युत्तमेभ्यः शिरसाभिवाद्य विभीषणं तत्र च सस्वजे स ॥

तावप्युभौ मानुषराजपुत्रौ तं गन्धमाघ्राय महौषधीनाम् ।
बभूवतुस्तत्र तदा विशल्यावुत्तस्थुरन्ये च हरिप्रवीराः ॥

ततोऽस्तं गत आदित्ये रौद्रे तस्मिन्निशामुखे ।
लङ्कामभिमुखाः सोल्का जग्मुस्ते प्लवगर्षभाः ॥

गोपुराट्टप्रतोलीषु चर्यासु विविधासु च ।
प्रासादेषु च संहृष्टाः ससृजुस्ते हुताशनम् ॥

तेषां गृहसहस्राणि ददाह हुतभुक्तदा ॥

प्रासादाः पर्वताकाराः पतन्ति धरणीतले ॥

उद्घुष्टं वानराणां च राक्षसानां च निःस्वनम् ।
दिशो दश समुद्रं च पृथिवीं च व्यनादयन् ॥

विशल्यौ च महात्मानौ तावुभौ रामलक्ष्मणौ ।
असंभ्रान्तौ जगृहतुस्ते उभे धनुषी वरे ॥

ततो रामशरान्दृष्ट्वा विमानेषु गृहेषु च ।
संनाहो राक्षसेन्द्राणां तुमुलः समपद्यत ॥

तेषां संनह्यमानानां सिंहनादं च कुर्वताम् ।
शर्वरी राक्षसेन्द्राणां रौद्रीव समपद्यत ॥

आदिष्टा वानरेन्द्रास्ते सुग्रीवेण महात्मना ।
आसन्नं द्वारमासाद्य युध्यध्वं च प्लवंगमाः ॥

तेषु वानरमुख्येषु दीप्तोल्कोज्ज्वलपाणिषु ।

स्थितेषु द्वारमाश्रित्य रावणं क्रोध आविशत् ॥
स कुम्भं च निकुम्भं च कुम्भकर्णात्मजावुभौ ।
प्रेषयामास सक्रुद्धो राक्षसैर्बहुभिः सह ॥
ततस्तु चोदितास्तेन राक्षसा ज्वलितायुधाः ।
लङ्काया निर्ययुर्वीराः प्रणदन्तः पुनःपुनः ॥
तद्दृष्ट्वा बलमायात राक्षसानां दुरासदम् ।
संचचाल प्लवंगानां बलमुच्चैर्ननाद च ॥
घ्नन्तमन्य जघानान्यः पातयन्तमपातयत् ।
गर्हमाणं जगर्हान्यो दशन्तमपरोऽदशत् ॥
देहीत्यन्यो ददात्यन्यो ददामीत्यपरः पुनः ।
किं क्लेशयसि तिष्ठेति तत्रान्योन्यं बभाषिरे ॥
निपातितमहावीरां दृष्ट्वा रक्षश्चमूं तदा ।
कुम्भः प्रचक्रे तेजस्वी रणे कर्म सुदुष्करम् ॥
सोऽङ्गदं बहुभिर्बाणैः कुम्भो विव्याध वीर्यवान् ॥
अकुण्ठधारैर्निशितैस्तीक्ष्णैः कनकभूषणैः ।
ततः कुम्भं समुत्क्षिप्य सुग्रीवो लवणाम्भसि ।
पातयामास वेगेन दर्शयन्नुदधेः स्थलम् ॥
स तु तेन प्रहारेण विह्वलो भृशपीडितः ।
निपपात तदा कुम्भो गतार्चिरिव पावकः ॥
निकुम्भो भ्रातरं दृष्ट्वा सुग्रीवेण निपातितम् ।
प्रदहन्निव कोपेन वानरेन्द्रमुदैक्षत ॥
आददे परिघं धीरो महेन्द्रशिखरोपमं ।

यमदण्डोपमं भीमं रक्षसा भयनाशनम् ॥
निकुम्भपरिघाघूर्णं भ्रमतीव नभस्थलम् ।
दुरासदश्च संजज्ञे परिघाभ्रमणप्रभः ॥
क्रोधेन्धनो निकुम्भाग्नियुगान्ताग्निरिवोत्थितः ।
राक्षसा वानराश्चापि न शेकुः स्पन्दितुं भयात् ॥
हनुमांस्तु विवृत्योरस्तस्थौ प्रमुखतो बली ॥
परिघोपमबाहुस्तु परिघं भास्करप्रभम् ।
बली बलवतस्तस्य पातयामास वक्षसि ॥
स्थिरे तस्योरसि व्यूढे परिघः शतधा कृतः ।
विकीर्य्यमाणः सहसा उल्काशतमिवाम्बरे ॥
स तयाभिहतस्तेन हनुमान्प्लवगोत्तमः ।
मुष्टिं सम्वर्त्तयामास बलेनातिमहाबलः ।
तमुद्यम्य महातेजा निकुम्भोरसि वीर्य्यवान् ॥
अभिचिक्षेप वेगेन वेगवान् वायुविक्रमः ।
तत्र पुस्फोट वर्म्मास्य प्रसुस्राव च शोणितम् ॥
निक्षिप्य परमायत्तो निकुम्भं निष्पिपेष च ॥
उत्पत्य चास्यवेगेन पपातोरसि वेगवान् ।
उत्पाटयामास शिरो भैरवं नदतो महान् ॥
निकुम्भं निहतं दृष्ट्वा कुम्भं च विनिपातितम् ॥
रावणः परमामर्षी प्रजज्वालानलो यथा ।
नैर्ऋतः क्रोधशोकाभ्यां द्वाभ्यां तु परिमूर्च्छितः ॥
खरपुत्रं विशालाक्षं मकराक्षमचोदयत् ।

गच्छ पुत्र मयाज्ञप्तो बलेनाभिसमन्वितः ॥
राघवं लक्ष्मणं चैव जहि तौ सवनौकसौ ।
सोऽभिवाद्य दशग्रीवं कृत्वा चापि प्रदक्षिणम् ॥
निर्जगाम गृहाच्छुभ्राद्रावणस्याज्ञया बली ॥
स तं दृष्ट्वापतन्तं तु प्रहस्य रघुनन्दनः ।
पावकास्त्रं ततो रामः संदधे तु शरासने ॥
तेनास्त्रेण हतं रक्षः काकुत्स्थेन तदा रणे ।
संछिन्नहृदयः तत्र पपात च ममार च ॥
मकराक्षं हतं श्रुत्वा रावणः समितिंजयः ।
रोषेण महताविष्टो दन्तान्कटकटाय्य च ॥
कुपितश्च तदा तत्र किं कार्यमिति चिन्तयन् ।
आदिदेशाथ संक्रुद्धो रणायेन्द्रजितं सुतम् ॥
जहि वीर महावीर्यौ भ्रातरौ रामलक्ष्मणौ ।
अदृश्यो दृश्यमानो वा सर्वथा त्वं बलाधिकः ॥
तथोक्तो राक्षसेन्द्रेण प्रतिगृह्य पितुर्वचः ।
यज्ञभूमौ स विधिवत्पावकं जुहवेन्द्रजित् ॥
आपपाताथ संक्रुद्धो दशग्रीवेण चोदितः ।
स तु वैहायसरथो युधि तौ रामलक्ष्मणौ ॥
अचक्षुर्विषये तिष्ठन्विव्याध निशितैः शरैः ।
तौ हन्यमानौ नाराचैर्धाराभिरिव पर्वतौ ।
हेमपुङ्खान्नरव्याघ्रौ तिग्मान्मुमुचतुः शरान् ॥
अन्तरिक्षं समासाद्य रावणिं कङ्कपत्रिणः ।

निकृत्य पतगा भूमौ पेतुस्ते शोणिताप्लुताः ॥
इन्द्रजित्तु ततो दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
रणायात्युद्यतौ वीरौ मायां प्रादुष्करोत्तदा ॥
इन्द्रजित्तु रथे स्थाप्य सीतां मायामयीं तदा ।
बलेन महतावृत्य तस्या वधमरोचयन् ॥
कृत्वा विक्रोशं निस्त्रिंश मूर्ध्नि सीतामकर्षयन् ।
तां स्त्रिय पश्यतां तेषां ताडयामास राक्षसः ॥
क्रोशन्ती रामरामेति मायया योजितां रथे ।
गृहीतमूर्धजां दृष्ट्वा हनूमान्दैन्यमागतः ।
अभ्यधावत्सुसंक्रुद्धो राक्षसेन्द्रसुत प्रति ॥
तामिन्द्रजित्स्त्रियं हत्वा हनूमन्तमुवाच ह ।
मया रामस्य पश्येमां प्रिया शस्त्रनिषूदिताम् ॥
एषा विशस्ता वैदेही निष्फलो वः परिश्रमः ।
स तु शोकेन चाविष्टः कोपेन महता कपिः ॥
शीघ्रमागम्य रामाय दुःखितो वाक्यमब्रवीत् ।
समरे युध्यमानानामस्माकं प्रेक्षता च सः ॥
जघान रुदतीं सीतामिन्द्रजिद्रावणात्मजः ।
उद्भ्रान्तचित्तस्तां दृष्ट्वा विषण्णोऽहमरिंदम ॥
तदहं भवतो वृत्तं विज्ञापयितुमागतः ।
तस्य तद्वचनं श्रुत्वा राघवः शोकमूर्च्छितः ॥
निपपात तदा भूमौ छिन्नमूल इव द्रुमः ।
तं भूमौ देवसंकाशं पतितं दृश्य राघवम् ॥

अभिपेतु. समुत्पत्य सर्वत' कपिसत्तमा' ।
आसिञ्चन्सलिलैश्चैनं पद्मोत्पलसुगन्धिभि ॥
तं लक्ष्मणोऽथ बाहुभ्या परिष्वज्य सुदु खितः ।
विभीषणमुखं दृष्ट्वा सुग्रीवं तांश्च वानरान् ॥
लक्ष्मणोवाच मन्दार्थमिदं बाष्पपरिप्लुत' ।
हता इन्द्रजिता सीता इति श्रुत्वैव राघवः ॥
हनूमद्वचनात्सौम्य ततो मोहमुपाश्रितः ।
कथयन्तं तु सौमित्रिं संनिवार्य विभीषण' ॥
पुष्कलार्थमिदं वाक्य विसंज्ञ रामम‍ब्रवीत् ।
मनुजेन्द्रार्तरूपेण यदुक्तस्त्व' हनूमता ॥
तदयुक्तमहं मन्ये सागरस्येव शोषणम् ॥
अभिप्राय तु जानामि रावणस्य दुरात्मन ।
सीतां प्रति महाबाहो न च घातं करिष्यति ॥
लक्ष्मणं प्रेषयास्माभि' सह सैन्यानुकर्षिभिः ॥
एष तं नरशार्दूलो रावणिं निशितैः शरैः ।
त्याजयिष्यति तत्कर्म ततो वध्यो भविष्यति ॥
विभीषणवचः श्रुत्वा रामो वाक्यमथाब्रवीत् ।
जानामि तस्य रौद्रस्य मायां सत्यपराक्रम ॥
हनूमत्प्रमुखैश्चैव यूथपैः सह लक्ष्मण ॥
जहि तं राक्षससुतं मायाबलसमन्वितम् ॥
सोऽभिवाद्य गुरोः पादौ कृत्वा चापि प्रदक्षिणम् ।
निकुम्भिलामभिययौ चैत्य' रावणिपालितम् ॥

विभीषणेन सहितो राजपुत्रः प्रतापवान् ।
कृतस्वस्त्ययनो भ्रात्रा लक्ष्मणस्त्वरितो ययौ ॥
वानराणां सहस्रैस्तु हनूमान्बहुभिर्वृतः ।
विभीषणश्च सामात्यो लक्ष्मणं त्वरितं ययौ ॥
स गत्वा दूरमध्वानं सौमित्रिर्मित्रनन्दनः ।
राक्षसेन्द्रबलं दूरादपश्यद्व्यूहमाश्रितम् ॥
ऋक्षाः शाखामृगाश्चैव द्रुमप्रवरयोधिनः ।
अभ्यधावन्त सहितास्तदनीकमवस्थितम् ॥
राक्षसाश्च शितैर्बाणैरसिभिः शक्तितोमरैः ।
अभ्यवर्तन्त समरे कपिसैन्यजिघांसवः ॥
स सम्प्रहारस्तुमुलः संजज्ञे कपिरक्षसाम् ।
शब्देन महता लङ्कां नादयन्वै समन्ततः ॥
अविदूरं ततो गत्वा प्रविश्य तु महद्वनम् ।
अदर्शयत तत्कर्म लक्ष्मणाय विभीषणः ॥
तेजस्वी रावणभ्राता लक्ष्मणाय न्यवेदयत् ॥
इहोपहारं भूतानां बलवान्रावणात्मजः ।
उपहृत्य ततः पश्चात्सङ्ग्राममभिवर्तते ॥
अदृश्यः सर्वभूतानां ततो भवति राक्षसः ।
निहन्ति समरे शत्रून्बध्नाति च शरोत्तमैः ॥
तमप्रविष्टं न्यग्रोधं बलिनं रावणात्मजम् ।
विध्वंसय शरैर्दीप्तैः सरथं साश्वसारथिम् ॥
तथेत्युक्त्वा महातेजाः सौमित्रिर्मित्रनन्दनः ।

बभूवावस्थितस्तत्र चित्र विस्फारयन्धनु: ॥
स रथेनाग्निवर्णेन बलवान्रावणात्मज: ।
इन्द्रजित्कवची खड्गी सध्वज: प्रत्यदृश्यत ॥
तमुवाच महातेजा: पौलस्त्यमपराजितम् ।
समाह्वये त्वां समरे सम्यग्युद्धं प्रयच्छ मे ॥
एवमुक्तो महातेजा मनस्वी रावणात्मज: ।
अब्रवीत्परुषं वाक्यं तत्र दृष्ट्वा विभीषणम् ॥
इह त्वं जातसंवृद्ध: साक्षाद्भ्राता पितुर्मम
कथं द्रुह्यसि पुत्रस्य पितृव्यो मम राक्षस ॥
न ज्ञातित्वं न सौहार्दं न जातिस्तव दुर्मते ।
प्रमाणं न च सौंदर्यं न धर्मो धर्मदूषण ॥
गुणवान्वा परजन: स्वजनो निर्गुणोऽपि वा ।
निर्गुण: स्वजन: श्रेयान्य: पर: पर एव स: ॥
य: स्वपक्षं परित्यज्य परपक्षं निषेवते ।
स स्वपक्षे क्षयं याते पश्चात्तैरेव हन्यते ॥
इत्युक्तो भ्रातृपुत्रेण प्रत्युवाच विभीषण: ।
अजानन्निव मच्छीलं किं राक्षस विकत्थसे ॥
धर्मात्प्रच्युतशीलं हि पुरुषं पापनिश्चयम् ।
त्यक्त्वा सुखमवाप्नोति हस्तादाशीविषं यथा ॥
परस्वहरणे युक्तं परदाराभिमर्शकम् ।
त्याज्यमाहुर्दुरात्मानं वेश्म प्रज्वलितं यथा ॥
अतिमानश्च बालश्च दुर्विनीतश्च राक्षस ।

बद्धस्त्वं कालपाशेन ब्रूहि मां यद्यदिच्छसि ॥
एवमुक्तो धनुर्भीमं परामृश्य महाबलः ।
ससर्ज निशितान्बाणानिन्द्रजित्समितिंजयः ॥
स शरैरतिविद्धाङ्गो रुधिरेण समुक्षितः ।
शुशुभे लक्ष्मणः श्रीमान्विधूम इव पावकः ॥
इन्द्रजित्त्वात्मनः कर्म प्रसमीक्ष्याभिगम्य च ।
विनद्य सुमहानादमिदं वचनमब्रवीत् ॥
अद्य गोमायुसङ्घाश्च श्येनसङ्घाश्च लक्ष्मण ।
गृध्राश्च निपतन्तु त्वां गतासुं निहतं मया ॥
इति ब्रुवाणं संक्रुद्धः परुषं रावणात्मजम् ।
हेतुमद्वाक्यमर्थज्ञो लक्ष्मणः प्रत्युवाच ह ॥
वाग्बलं त्यज दुर्बुद्धे क्रूरकर्मन्हि राक्षस ।
अकृत्वा कत्थसे कर्म किमर्थमिह राक्षस ।
कुरु तत्कर्म येनाहं श्रद्धेयं तव कत्थनम् ॥
इत्युक्त्वा पञ्च नाराचानाकर्णापूरिताञ्शरान् ।
विजघान महावेगांल्लक्ष्मणो राक्षसोरसि ॥
विक्रान्तौ बलसंपन्नावुभौ विक्रमशालिनौ ।
उभौ परमदुर्जेयावतुल्यबलतेजसौ ॥
अभीक्ष्णं निःश्वसन्तौ वै युध्येतां तुमुलौ युधि ।
शरसंकृत्तसर्वाङ्गौ सर्वतो रुधिरोक्षितौ ।
सुदीर्घकालं तौ वीरावन्योन्यं निशितैः शरैः ॥
अथ राक्षससिंहस्य कृष्णान्कनकभूषणान् ।

शरैश्चतुर्भिः सौमित्रिर्विव्याध चतुरो हयान् ॥
स हताश्वो महातेजा भूमौ तिष्ठन्निशाचरः ।
इन्द्रजित्परमक्रुद्धः संप्रजज्वाल तेजसा ॥
स मण्डलीकृतधनू रावणिः समितिंजयः ।
हरीनभ्यहनत्क्रुद्धः परं लाघवमास्थितः ॥
अथैन्द्रमस्त्रं सौमित्रिः संयुगेष्वपराजितम् ।
लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति ॥
तच्छिरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् ।
प्रमथ्येन्द्रजितः कायात्पातयामास भूतले ॥
चुक्रुशुस्ते ततः सर्वे वानराः सविभीषणाः ।
जज्ञेऽथ जयसंनादो गन्धर्वाप्सरसामपि ॥
हतमिन्द्रजितं दृष्ट्वा शयानं च रणक्षितौ ।
राक्षसानां सहस्रेषु न कश्चित्प्रत्यदृश्यत ॥
यथास्तंगत आदित्ये नावतिष्ठन्ति रश्मयः ।
तथा तस्मिन्निपतिते राक्षसास्ते गता दिशः ॥
तदसुकरमथाभिवीक्ष्य हृष्टाः प्रियसुहृदो युधि लक्ष्मणस्य कर्म ।
परममुपलभन्मनःप्रहर्षं विनिहतमिन्द्ररिपुं निशम्य देवाः ॥
ततो राममभिक्रम्य सौमित्रिरभिवाद्य च ।
तस्थौ भ्रातृसमीपस्थः शक्रस्येन्द्रानुजो यथा ॥
रावणेस्तु शिरश्छिन्नं लक्ष्मणेन महात्मना ।
न्यवदेयत रामाय तदा हृष्टो विभीषणः ॥
श्रुत्वैव तु महावीर्यो लक्ष्मणेनेन्द्रजिद्वधम् ।

प्रहर्षमतुलं लेभे वाक्य चेदमुवाच ह ॥
साधु लक्ष्मण तुष्टोऽस्मि कर्म चासुकरं कृतम् ।
रावणेर्हि विनाशेन जितमित्युपधारय ॥
स तं शिरस्युपाघ्राय लक्ष्मणं कीर्तिवर्धनम ।
लज्जमानं बलात्स्नेहादङ्कमारोप्य वीर्यवान ॥
उपवेश्य तमुत्सङ्गे परिष्वज्यावपीडितम् ।
भ्रातरं लक्ष्मणं स्निग्धं पुन पुनरुदैक्षत ॥
तत. प्रकृतिमापन्नो हृतशल्यो गतक्लमः ।
सौमित्रिर्मुमुदे तत्र क्षणेन विगतज्वर ॥
तत पौलस्त्यसचिवा श्रुत्वा चेन्द्रजितो वधम ।
आचचक्षुरवज्ञाय दशग्रीवाय सत्वरा ॥
घोरमिन्द्रजित सङ्ख्ये कश्मल प्राविशन्महन ।
उपलभ्य चिरात्संज्ञां राजा राक्षसपुंगव. ॥
पुत्रशोकाकुलो दीनो विललापाकुलेन्द्रिय ।
हा राक्षसचमूमुख्य मम वत्स महाबल ॥
जित्वेन्द्रं कथमद्य त्वं लक्ष्मणस्य वशगतः ।
ननु त्वमिषुभि क्रुद्धो भिन्द्या. कालान्तकावपि ॥
अद्य लोकास्त्रय कृत्स्ना पृथिवी च सकानना ।
एकेनेन्द्रजिता हीना शून्येव प्रतिभाति मे ॥
यौवराज्यं च लङ्कां च रक्षांसि च परंतप ।
मातरं मां च भार्याश्च क्व गतोऽसि विहाय नः ॥
मम नाम त्वया वीर गतस्य यमसादनम ।

प्रेतकार्याणि कार्याणि विपरीते हि वर्तसे ॥

एवमादि विलापार्तं रावणं राक्षसाधिपम् ।
आविवेश महान्कोपः पुत्रव्यसनसंभवः ॥

प्रकृत्या कोपनं ह्येनं पुत्रस्य पुनराधयः ।
दीप्तं संदीपयामासुर्घर्मेऽर्कमिव रश्मयः ॥

स पुत्रवधसंतप्तः क्रूरः क्रोधवशं गतः ।
समीक्ष्य रावणो बुध्या सीतां हन्तुं व्यवस्यत ॥

मायया मम वत्सेन वञ्चनार्थं वनौकसाम् ।
किंचिदेव हतं तत्र सीतेयमिति दर्शितम् ॥

तदिदं तथ्यमेवाहं करिष्ये प्रियमात्मनः ।
वैदेहीं नाशयिष्यामि क्षत्रबन्धुमनुव्रताम् ॥

इत्येवमुक्त्वा सचिवान्खड्गमाशु परामृशन् ।
अभिदुद्राव वैदेहीं रावणः क्रोधमूर्च्छितः ॥

मैथिली रक्ष्यमाणा तु राक्षसीभिरनिन्दिता ।
ददर्श राक्षसं क्रुद्धं निस्त्रिंशवरधारिणम् ॥

एतस्मिन्नन्तरे तस्य अमात्यः शीलवाञ्छुचिः ।
सुपार्श्वो नाम मेधावी रावणं रक्षसां वरम् ।
निवार्यमाणः सचिवैरिदं वचनमब्रवीत् ॥

कथं नाम दशग्रीव साक्षाद्वैश्रवणानुज ।
हन्तुमिच्छसि वैदेहीं क्रोधाद्धर्ममपास्य च ॥

स तद्दुरात्मा सुहृदा निवेदितं वचः सुधर्म्यं प्रतिगृह्य रावणः ।
गृहं जगामाथ ततश्च वीर्यवान्पुनः सभां च प्रययौ सुहृद्वृतः ॥

आर्तानां राक्षसीनां तु लङ्कायां वै कुलेकुले ।
रावणः करुणं शब्दं शुश्राव परिदेवितम् ॥
स तु दीर्घं विनिःश्वस्य मुहूर्तं ध्यानमास्थितः ।
बभूव परमक्रुद्धो रावणो भीमदर्शनः ॥
संदश्य दशनैरोष्ठं क्रोधसंरक्तलोचनः ।
राक्षसैरपि दुर्दर्शः कालाग्निरिव मूर्तिमान् ॥
उवाच च समीपस्थान्राक्षसान्राक्षसेश्वरः ।
क्रोधाव्यक्तकथस्तत्र निर्दहन्निव चक्षुषा ॥
अद्य बाणैर्धनुर्मुक्तैर्युगान्तादित्यसंनिभैः ।
राघवं लक्ष्मणं चैव नेष्यामि यमसादनम् ॥
हतो भ्राता च येषां वै येषां च तनयो हतः ।
वधेनाद्य रिपोस्तेषां करोम्यश्रुप्रमार्जनम् ॥
अद्य काकाश्च गृध्राश्च ये च मांसाशिनोऽपरे ।
सर्वांस्तांस्तर्पयिष्यामि शत्रुमांसैः शराहतैः ॥
कल्प्यतां मे रथः शीघ्रं क्षिप्रमानीयतां धनुः ।
अनुप्रयान्तु मां युद्धे येऽत्र शिष्टा निशाचराः ॥
ततो मुहूर्तान्निष्पेतू राक्षसा भीमदर्शनाः ।
नदन्तो भीमवदना नानाप्रहरणैर्भुजैः ॥
असिभिः पट्टिशैः शूलैर्गदाभिर्मुसलैर्हलैः ।
शक्तिभिस्तीक्ष्णधाराभिर्महद्भिः कूटमुद्गरैः ॥
ततः प्रयातः सहसा राक्षसैर्बहुभिर्वृतः ।
रावणः सत्त्वगाम्भीर्याद्दारयन्निव मेदिनीम् ॥

ततश्चासीन्महानादस्तूर्याणां च ततस्तत ।
मृदङ्गैः पटहै. शङ्खै कलहै सह रक्षसाम् ॥
तेन नादेन महता पृथिवी समकम्पत ।
तं शब्दं सहसा श्रुत्वा वानरा दुद्रुवुर्भयात् ॥
ततो निष्पततोयुद्धे दशग्रीवस्य रक्षस ।
रणे निधनशसीनि रूपाण्यतानि जज्ञिरे ॥
अन्तरिक्षात्पपातोल्का निर्घातसमनिःस्वना ।
विनेदुरशिवा गृध्रा वायसैरभिमिश्रिता ॥
एतानचिन्तयन्घोरानुत्पातान्समवस्थितान् ।
निर्ययौ रावणो मोहाद्वधार्थ कालचोदित ॥
तत क्रुद्धो दशग्रीवः शरै काञ्चनभूषणैः ।
वानराणामनीकेषु चकार कदनं महत् ॥
दशाननः क्रोधविवृत्तनेत्रो यतोयतोऽभ्येति रथेन संख्ये ।
ततस्ततस्तस्य शरप्रवेगं सोढुं न शेकुर्हरियूथपास्ते ॥
कदनं तरसा कृत्वा राक्षसेन्द्रो वनौकसाम् ।
आससाद ततो युद्धे त्वरितं राघव रणे ॥
स राघवं समासाद्य क्रोधसंरक्तलोचन ।
व्यसृजच्छरवर्षाणि रावणो राक्षसेश्वर ॥
ताञ्छरौघांस्ततो भल्लैस्तीक्ष्णैश्चिच्छेद राघव ।
दीप्यमानान्महाघोराञ्छरानाशीविषोपमान् ॥
राघवो रावणं तूर्णं रावणो राघवं तथा ।
अन्योन्यं विविधैस्तीक्ष्णै. शरवर्षैर्ववर्षतुः ॥

उभौ हि परमेष्वासावुभौ युद्धविशारदौ ।
उभावस्त्रविदां मुख्यावुभौ युद्धे विचेरतुः ॥
ततो विव्याध गात्रेषु सर्वेषु समितिंजय ।
राघवस्तु सुसंक्रुद्धो रावणं बहुभिः शरैः ॥
एतस्मिन्नन्तरे क्रुद्धो राघवस्यानुजो बली ।
लक्ष्मणः सायकान्सप्त जग्राह परवीरहा ॥
तैः सायकैर्महावेगै रावणस्य महाद्युतिः ।
ध्वजं मनुष्यशीर्षं तु तस्य चिच्छेद नैकधा ॥
ततः शक्तिं महाशक्तिः प्रदीप्तामशनीमिव ।
विभीषणाय चिक्षेप राक्षसेन्द्रः प्रतापवान् ॥
अप्राप्तामेव तां बाणैस्त्रिभिश्चिच्छेद लक्ष्मणः ।
मोक्षितं भ्रातरं दृष्ट्वा लक्ष्मणेन स रावणः ।
लक्ष्मणाभिमुखस्तिष्ठन्निदं वचनमब्रवीत् ॥
मोक्षितस्ते बलश्लाघिन्यस्मादेवं विभीषणः ।
विमुच्य राक्षसं शक्तिस्त्वय्ययं विनिपात्यते ॥
इत्येवमुक्त्वा तां शक्तिमष्टघण्टां महास्वनाम् ॥
मयेन मायाविहिताममोघां शत्रुघातिनीम् ॥
लक्ष्मणाय समुद्दिश्य ज्वलन्तीमिव तेजसा ।
रावणः परमक्रुद्धश्चिक्षेप च ननाद च ॥
सा क्षिप्ता भीमवेगेन वज्राशनिसमस्वना ।
शक्तिरभ्यपतद्वेगाल्लक्ष्मणं रणमूर्धनि ॥
स ददर्श ततो रामः शक्त्या भिन्नं महाहवे ।

लक्ष्मणं रुधिरादिग्धं सपन्नगमिवाचलम् ॥
तां कराभ्यां परामृश्य रामः शक्तिं भयावहाम् ।
बभञ्ज समरे क्रुद्धो बलवान्विचकर्ष च ॥
अब्रवीच्च हनूमन्तं सुग्रीवं च महाकपिम् ॥
लक्ष्मणं परिवार्यैवं तिष्ठध्वं वानरोत्तमाः ।
पराक्रमस्य कालोऽयं सम्प्राप्तो मे चिरेप्सित ॥
काङ्क्षितं चातकस्येव घर्मान्ते मेघदर्शनम् ॥
अस्मिन्मुहूर्ते न चिरात्सत्यं प्रतिशृणोमि वः ।
अरावणमरामं वा जगद् द्रक्ष्यथ वानरा ॥
एवमुक्त्वा शितैर्बाणैस्तप्तकाञ्चनभूषणैः ।
आजघान रणे रामो दशग्रीवं समाहित ॥
तथा प्रविद्धैर्नाराचैर्मुसलैश्चापि रावण. ।
अभ्यवर्षत्तदा रामं धाराभिरिव तोयद. ॥
विकीर्यमाणः शरजालवृष्टिभिर्महात्मना दीप्तधनुष्मतार्दितः ।
भयात्प्रदुद्राव समेत्य रावणो यथानिलेनाभिहतो बलाहकः ॥
शक्त्या निपातितं दृष्ट्वा रावणेन बलीयसा ।
लक्ष्मणं समरे शूरं शोणितौघपरिप्लुतम् ॥
स दत्त्वा तुमुलं युद्धं रावणस्य दुरात्मन ।
विसृजन्नेव बाणौघान्सुषेणमिदमब्रवीत् ॥
शोणितार्द्रमिमं वीरं प्राणैः प्रियतरं मम ।
पश्यतो मम का शक्तिर्योद्धुं पर्याकुलात्मन ॥
अयं स समरश्लाघी भ्राता मे शुभलक्षणः ।

यदि पञ्चत्वमापन्नः प्राणैर्मे किं सुखेन वा ॥
लज्जतीव हि मे वीर्यं भ्रश्यतीव कराद्धनुः ।
सायका व्यवसीदन्ति दृष्टिर्बाष्पवशं गता ॥
देशेदेशे कलत्राणि देशेदेशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥
किं नु राज्येन दुर्धर्ष लक्ष्मणेन विना मम ।
कथं वक्ष्याम्यहं त्वम्बां सुमित्रां पुत्रवत्सलाम् ॥
राममेवं ब्रुवाणं तु शोकव्याकुलितेन्द्रियम् ॥
आश्वासयन्नुवाचेदं सुषेणः परमं वचः ।
त्यजेमां नरशार्दूल बुद्धिं वैक्लव्यकारिणीम् ॥
नैव पञ्चत्वमापन्नो लक्ष्मणो लक्ष्मिवर्धन ॥
नह्यस्य विकृतं वक्त्रं न च श्यामत्वमागतम् ।
समीपस्थमुवाचेदं हनूमन्तं महाकपिम् ।
सौम्य शीघ्रमितो गत्वा पर्वतं हि महोदयम् ॥
पूर्वं तु कथितो योऽसौ वीर जाम्बवता तव ।
दक्षिणे शिखरे जातां महौषधिमिहानय ॥
इत्येवमुक्तो हनुमान्गत्वा चौषधिपर्वतम् ।
चिन्तामभ्यगमच्छ्रीमानजानंस्ता महौषधीः ॥
तस्य बुद्धिः समुत्पन्ना मारुतेरमितौजसः ।
इदमेव गमिष्यामि गृहीत्वा शिखरं गिरेः ॥
इति संचिन्त्य हनुमान्गत्वा क्षिप्रं महाबलः ।
आसाद्य पर्वतश्रेष्ठं त्रिः प्रकम्प्य गिरेस्तटम् ॥

गृहीत्वा हरिशार्दूलो हस्ताभ्यां समतोलयन् ।।
समागम्य महावेग संन्यस्य शिखरं गिरेः ।
विश्रम्य किंचिद्धनुमान्सुषेणमिदमब्रवीत् ।।
तदिदं शिखरं कृत्स्नं गिरेस्तस्याहृतं मया ।।
ततः संक्षोदयित्वा तामोषधीं वानरोत्तमः ।
लक्ष्मणस्य ददौ नस्तः सुषेणः सुमहाद्युतिः ।।
सशल्यः स समाघ्राय लक्ष्मणः परवीरहा ।
विशल्यो विरुजः शीघ्रमुदतिष्ठन्महीतलात् ।।
तमुत्थितं तु हरयो भूतलात्प्रेक्ष्य लक्ष्मणम् ।
साधुसाध्विति सुप्रीता लक्ष्मणं प्रत्यपूजयन् ।।
एह्येहीत्यब्रवीद्रामो लक्ष्मणं परवीरहा ।
सस्वजे गाढमालिङ्ग्य बाष्पपर्याकुलेक्षणः ।।
अब्रवीच्च परिष्वज्य सौमित्रिं राघवस्तदा ।
दिष्ट्या त्वां वीर पश्यामि मरणात् पुनरागतम् ।।
नहि मे जीवितेनार्थः सीतयाच जयेन वा ।
कोहिमे जीवितेनार्थः स्त्वयि पञ्चत्वमागते ।।
इत्येवं ब्रुवतस्तस्य राघवस्य महात्मनः ।
खिन्नः शिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ।।
अहन्तु वधमिच्छामि शीघ्रमस्य दुरात्मनः ।
यावदस्तं नयात्वेषः कृतकर्म्मा दिवाकरः ।।
लक्ष्मणेन तु तद्वाक्यमुक्तं श्रुत्वा स राघवः ।
सन्दधे परवीरघ्नो धनुरादाय वीर्य्यवान ।।

रावणाय शरान् घोरान् विससर्ज्ज चमूमुखे ॥
स तु तेन तदा क्रोधात्काकुत्स्थेनार्दितो भृशम् ।
रावणः समरश्लाघी महाक्रोधमुपागमत् ॥
स दीप्तनयनोऽमर्षाच्चापमुद्यम्य वीर्यवान् ।
अभ्यर्दयत्सुसंक्रुद्धो राघवं परमाहवे ॥
ततः क्रोधसमाविष्टो रामो दशरथात्मजः ।
उवाच रावणं वीरः प्रहस्य परुषं वचः ॥
मया विरहितां दीनां वर्तमानां महावने ।
वैदेहीं प्रसभं हृत्वा शूरोऽहमिति मन्यसे ॥
स्त्रीषु शूरविनाथासु परदाराभिमर्शनम् ।
कृत्वा कापुरुषं कर्म शूरोऽहमिति मन्यसे ॥
भिन्नमर्याद निर्लज्ज चारित्रेष्वनवस्थित ।
दर्पान्मृत्युमुपादाय शूरोऽहमिति मन्यसे ॥
शूरेण धनदभ्रात्रा बलैः समुदितेन च ।
श्लाघनीयं महत्कर्म यशस्यं च कृतं त्वया ॥
उत्सेकेनाभिपन्नस्य गर्हितस्याहितस्य च ।
कर्मणः प्राप्नुहीदानीं तस्याद्य सुमहत्फलम् ॥
शूरोऽहमिति चात्मानमवगच्छसि दुर्मते ।
नैव लज्जास्ति ते सीतां चौरवद्व्यपकर्षतः ॥
दिष्ट्यासि मम मन्दात्मंश्चक्षुर्विषयमागतः ।
अद्य त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनम् ॥
अद्य ते मच्छरैश्छिन्नं शिरो ज्वलितकुण्डलम् ।

क्रव्यादा व्यपकर्षन्तु विकीर्णं रणपांसुषु ॥
इत्येव स वदन्वीरो रामः शत्रुनिबर्हणः ।
राक्षसेन्द्रं समीपस्थं शरवर्षैरवाकिरत् ॥
भूय एवार्दयद्रामो रावणं राक्षसान्तकृत् ॥
हरीणां चाश्मनिकरैः शरवर्षैश्च राघवः ।
हन्यमानो दशग्रीवो विघूर्णहृदयोऽभवत् ॥
सूतस्तु रथनेतास्य तदवस्थं निरीक्ष्य तम् ।
शनैर्युद्धादसंभ्रान्तो रथं तस्यापवाहयत् ॥
स तु मोहात्सुसंक्रुद्धः कृतान्तबलचोदितः ।
क्रोधसंरक्तनयनो रावणः सूतमब्रवीत् ॥
किमर्थं मामवज्ञाय मच्छन्दमनवेक्ष्य च ।
त्वया शत्रुसमक्षं मे रथोऽयमपवाहितः ॥
त्वयाद्य हि ममानार्य चिरकालमुपार्जितम् ।
यशो वीर्यं च तेजश्च प्रत्ययश्च विनाशितः ॥
निवर्तय रथं शीघ्रं यावन्नापैति मे रिपुः ।
यदि वाध्युषितोऽसि त्वं स्मर्यते यदि मे गुणः ॥
एवं परुषमुक्तस्तु हितबुद्धिरबुद्धिना ।
अब्रवीद्रावणं सूतो हितं सानुनयं वचः ॥
न भीतोऽस्मि न मूढोऽस्मि नोपजप्तोऽस्मि शत्रुभिः ।
न प्रमत्तो न निःस्नेहो विस्मृता न च सत्क्रिया ॥
मया तु हितकामेन यशश्च परिरक्षता ।
स्नेहप्रसन्नमनसा हितमित्यप्रियं कृतम् ॥

तव विश्रामहेतोस्तु तथैषा रथवाजिनाम् ।
स्वेच्छया न मया वीर रथोऽयमपवाहित. ।
ततो द्रुतं रावणवाक्यचोदित प्रचोदयामास हयान्स सारथि: ।
स राक्षसेन्द्रस्य ततो महारथ: क्षणेन रामस्य रणाग्रतोऽभवत् ॥
तत: क्रुद्धो दशग्रीवस्ताम्रविस्फारितेक्षण ।
रथप्रतिमुखं राम सायकैरवधूनयत् ॥
धर्षणामर्षितो रामो धैर्यं रोषेण लम्भयन ।
जग्राह सुमहावेगमैन्द्रं युधि शरासनम ॥
तत' प्रवृत्तं सुक्रू' रामरावणयोस्तदा ।
सुमहद्द्वैरथं युद्धं मर्वलोकभयावहम ॥
ततो राक्षससैन्यं च हरीणां च महद्बलम ।
प्रगृहीतप्रहरणं निश्चेष्ट समवर्तत ॥
नानाप्रहरणैर्व्यग्रैर्भुजैर्विस्मितबुद्धय' ।
तस्थु. प्रेक्ष्य च मर्वे ते नाभिजग्मु परस्परम ॥
रावणस्य ततो रामो धनुर्मुक्तै' शितै' शरै' ।
चतुर्भिश्चतुरो दीप्तान्हयान्प्रत्यपसर्पयन् ॥
स क्रोधवशमापन्नो हयानामपसर्पणे ।
मुमोच निशितान्बाणान्राघवाय दशानन' ॥
सोऽतिविद्धो बलवता दशग्रीवेण राघव: ।
जगाम न विकारं च न चापि व्यथितोऽभवत् ॥
मुमोच राघवो वीर' सायकान्स्यन्दने रिपो' ।
रावणोऽपि तत: क्रुद्धो रथस्थो राक्षसेश्वर: ॥

गदामुसलवर्षेण रामं प्रत्यर्दयद्रणे ।
तत्प्रयुक्तं पुनर्युद्ध तुमुलं रोमहर्षणम् ॥
चकम्पे मेदिनी कृत्स्ना सशैलवनकानना ।
रामरावणयोर्युद्ध रामरावणयोरिव ॥
एवं ब्रुवन्तो ददृशुस्तद्युद्धं रामरावणम् ।
तत. क्रोधान्महाबाहू रघूणां कीर्तिवर्धन. ॥
संधाय धनुषा राम. शरमाशीविषोपमम् ।
रावणस्य शिरोऽच्छिन्दच्छ्रीमज्ज्वलितकुण्डलम् ॥
तच्छिर· पतितं भूमौ दृष्ट लोकैस्त्रिभिस्तदा ।
तस्यैव सदृशं चान्यद्रावणस्योत्थित शिर ॥
तत्क्षिप्रं क्षिप्रहस्तेन रामेण क्षिप्रकारिणा ।
द्वितीयं रावणशिरश्छिन्नं संयति सायकै ॥
छिन्नमात्र च तच्छीर्ष पुनरेव प्रदृश्यते ।
एवमेव शतं छिन्नं शिरसां तुल्यवर्चसाम् ॥
न चैव रावणस्यान्तो दृश्यते जीवितक्षये ।
मार्गणैर्बहुभिर्युक्तश्चिन्तयामास राघवः ॥
मारीचो निहतो यैस्तु खरो यैस्तु सदूषणः ।
त इमे सायकाः सर्वे युद्धे प्रात्ययिका मम ॥
किं तु तत्कारणं येन रावणे मन्दतेजसः ।
अथ संस्मारयामास मातली राघवं तदा ॥
अजानन्निव किं वीर त्वमेनमनुवर्तसे ।
यं तस्मै प्रथमं प्रादादगस्त्यो भगवानृषिः ॥

ब्रह्मदत्त महद्बाणममोघं युधि वीर्यवान् ।
अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः ॥
वेदप्रोक्तेन विधिना संदधे कार्मुके बली ।
तस्मिन्संधीयमाने तु राघवेण शरोत्तमे ॥
सर्वभूतानि संत्रेसुश्चचाल च वसुंधरा ।
स रावणाय संक्रुद्धो भृशमायम्य कार्मुकम् ॥
चिक्षेप परमायत्तः शरं मर्मविदारणम् ।
स वज्र इव दुर्धर्षो वज्रिबाहुविसर्जितः ॥
कृतान्त इव चावार्यो न्यपतद्रावणोरसि ।
रुधिराक्तः स वेगेन शरीरान्तकरः शरः ॥
रावणस्य हरन्प्राणान्विवेश धरणीतलम् ।
गतासुर्भीमवेगस्तु नैर्ऋतेन्द्रो महाद्युतिः ॥
पपात स्यन्दनाद्भूमौ वृत्रो वज्रहतो यथा ।
तं दृष्ट्वा पतितं भूमौ हतशेषा निशाचराः ॥
हतनाथा भयत्रस्ताः सर्वतः सम्प्रदुद्रुवुः ।
अर्दिता वानरैर्हृष्टा लङ्कामभ्यपतन्भयात् ॥
हताश्रयत्वात्करुणैर्बाष्पप्रस्रवणैर्मुखैः ॥
ततो विनेदुः संहृष्टा वानरा जितकाशिनः ।
वदन्तो राघवजयं रावणस्य च तद्वधम् ॥
अथान्तरिक्षे व्यनदत्सौम्यस्त्रिदशदुन्दुभिः ।
दिव्यगन्धवहस्तत्र मारुतः सुसुखो ववौ ॥
निपपातान्तरिक्षाच्च पुष्पवृष्टिस्तदा भुवि ।

किरन्ती राघवरथ दुरावापा मनोहरा ॥
राघवस्तवसंयुक्ता गगने च विशुश्रुवे ।
साधुसाध्विति वागग्र्या देवतानां महात्मनाम् ॥
ततः प्रजग्मुः प्रशम मरुद्गणा दिशः प्रसेदुर्विमल नभोऽभवत् ।
मही चकम्पे न च मारुतो ववौ स्थिरप्रभश्चाप्यभवद्दिवाकरः ॥
ततस्तु सुग्रीवविभीषणाङ्गदा सुहृद्विशिष्टाः सहलक्ष्मणास्तदा ।
समेत्य हृष्टा विजयेन राघवं रणेऽभिरामं विधिनाभ्यपूजयन् ॥
भ्रातरं निहतं दृष्ट्वा शयानं निर्जितं रणे ।
शोकवेगपरीतात्मा विललाप विभीषण ॥
वीरविक्रान्त विख्यात प्रवीण नयकोविद ।
महार्हशयनोपेत कि शेषे निहतो भुवि ॥
तदिदं वीर संप्राप्त यन्मया पूर्वमीरितम ।
काममोहपरीतस्य यत्तन्न रुचितं तव ॥
आदित्य पतितो भूमौ मग्नस्तमसि चन्द्रमाः ।
चित्रभानुः प्रशान्तार्चिर्व्यवसायो निरुद्यमः ॥
वदन्तं हेतुमद्वाक्यं परिदृष्टार्थनिश्चयम् ।
राम शोकसमाविष्टमित्युवाच विभीषणम् ॥
नैवं विनष्टाः शोच्यन्ते क्षत्रधर्मव्यवस्थिताः
वृद्धिमाशसमाना ये निपतन्ति रणाजिरे ॥
इयं हि पूर्वैः संदिष्टा गतिः क्षत्रियसंमता ।
क्षत्रियो निहत संख्ये न शोच्य इति निश्चयः ॥
तमुक्तवाक्यं विक्रान्तं राजपुत्रं विभीषणः ।

उवाच शोकसंतप्तो भ्रातुर्हितमनन्तरम् ॥

एषोऽहिताग्निश्च महातपाश्च वेदान्तग कर्मसु चाग्र्यशूरः ।
एतस्य यत्प्रेतगतस्य कृत्यं तत्कर्तुमिच्छामि तव प्रसादात् ॥

स तस्य वाक्यैः करुणैर्महात्मा संबोधितः साधुविभीषणेन ।
आज्ञापयामास नरेन्द्रसूनुः स्वर्गीयमाधानमदीनसत्त्व. ॥

मरणान्तानि वैराणि निवृत्तं नः प्रयोजनम ।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥

रावणं निहत दृष्ट्वा राघवेण महात्मना ।
अन्त पुराद्विनिष्पेतू राक्षस्य· शोककर्शिता ॥

वार्यमाणा· सुबहुशो वेष्टन्त्यो रणपांसुषु ।
विमुक्तकेश्यः शोकार्ता गावो वत्सहता यथा ॥

आर्यपुत्रेति वादिन्यो हा नाथेति च सर्वशः ।
परिपेतु. कबन्धाङ्कां मही शोणितकर्दमाम् ॥

ता· पतिं सहसा दृष्ट्वा शयानं रणपांसुषु ।
निपेतुस्तस्य गात्रेषु च्छिन्ना वनलता इव ॥

बहुमानात्परिष्वज्य काचिदेनं रुरोद ह ।
चरणौ काचिदालम्ब्य काचित्कण्ठेऽवलम्ब्य च ॥

उत्क्षिप्य च भुजौ काचिद्भूमौ सुपरिवर्तते ।
हतस्य वदनं दृष्ट्वा काचिन्मोहमुपागमत् ॥

काचिदङ्के शिरः कृत्वा रुरोद मुखमीक्षती ।
स्नापयन्ती मुखं बाष्पैस्तुषारैरिव पङ्कजम् ॥

दशग्रीवं हतं दृष्ट्वा रामेणाचिन्त्यकर्मणा ।

पतिं मण्डोदरी तत्र कृपणा पर्यदेवयत् ॥
कथं त्रैलोक्यमाक्रम्य श्रिया वीर्येण चान्वितम् ।
अविषह्यं जघान त्वां मानुषो वनगोचर ॥
अथवा रामरूपेण कृतान्तः स्वयमागत ।
मायां तव विनाशाय विधायाप्रतितर्किताम् ॥
हा पश्चिमा मे संप्राप्ता दशा वैधव्यदायिनी ।
या मयासीन्न संबुद्धा कदाचिदपि मन्दया ॥
पिता दानवराजो मे भर्ता मे राक्षसेश्वरः ।
पुत्रो मे शक्रनिर्जेता इत्यहं गर्विता भृशम् ॥
यदा मे तनयः शस्तो लक्ष्मणेनेन्द्रजिद्युधि ।
तदा त्वभिहता तीव्रमद्य त्वस्मि निपातिता ॥
नय मामपि दुःखार्तां न वर्तिष्ये त्वया विना ।
कस्मात्त्वं मां विहायेह कृपणां गन्तुमिच्छसि ॥
मैथिलीमाहृतां दृष्ट्वा ध्यात्वा निःश्वस्य चायतम् ।
सत्यवाक्स महाबाहो देवरो मे यदब्रवीत् ॥
अयं राक्षसमुख्यानां विनाशः प्रत्युपस्थितः ।
कामक्रोधसमुत्थेन व्यसनेन प्रसङ्गिना ॥
सुहृदां हितकामानां न श्रुतं वचनं त्वया ।
भ्रातृणां चैव कार्त्स्न्येन हितमुक्तं दशानन ॥
हेत्वर्थयुक्तं विधिवच्छ्रेयस्करमदारुणम् ।
विभीषणेनाभिहितं न कृतं हेतुमत्त्वया ॥
मारीचकुम्भकर्णाभ्यां वाक्यं मम पितुस्तथा ।

न कृतं वीर्यमत्तेन तस्येद फलमीदृशम् ॥
धिगस्तु हृदयं यस्या ममेद न सहस्रधा ।
त्वयि पञ्चत्वमापन्ने फलते शोकपीडितम ॥
इत्येवं विलपन्ती सा बाष्पपर्याकुलेक्षणा ।
स्नेहोपस्कन्नहृदया तदा मोहमुपागमत् ॥
कश्मलाभिहता मन्ना बभौ सा रावणोरसि ।
संध्यानुरक्ते जलदे दीप्ता विद्युदिवोज्ज्वला ॥
तथागतां समुत्थाप्य सपत्न्यस्तां भृशातुरा ।
पर्यवस्थापयामासू रुदत्यो रुदती भृशम ॥
एतस्मिन्नन्तरे रामो विभीषणमुवाच ह ।
संस्कार क्रियतां भ्रातु स्त्रीगणः परिसान्त्व्यताम ॥
तमुवाच ततो धीमान्विभीषण इद वच ॥
राघवस्य वचः श्रुत्वा त्वरमाणो विभीषण ।
संस्कारयितुमारेभे भ्रातरं रावणं हतम ॥
शास्त्रदृष्टेन विधिना महर्षिविहितेन च ।
स ददौ पावकं तस्य विधियुक्त विभीषणः ॥
स्नात्वा चैवार्द्रवस्त्रेण तिलान्दर्भविमिश्रितान ।
उदकेन च संमिश्रान्प्रदाय विधिपूर्वकम ॥
ताः स्त्रियोऽनुनयामास सान्त्वयित्वा पुनःपुनः ।
गम्यतामिति ताः सर्वा विविशुर्नग तत: ॥
प्रविष्टासु पुरी स्त्रीषु राक्षसेन्द्रो विभीषणः ।
रामपार्श्वमुपागम्य समतिष्ठद्विनीतवत् ॥

राघवं परमप्रीतं सुग्रीवं परिषस्वजे ।
परिष्वज्य च सुग्रीवं लक्ष्मणेनाभिवादितः ॥
अथोवाच स काकुत्स्थं समीपपरिवर्तिनम् ।
सौमित्रिं मित्रसंपन्नं लक्ष्मणं शुभलक्षणम् ॥
विभीषणमिमं सौम्य लङ्कायामभिषेचय ।
अनुरक्तं च भक्तं च तथा पूर्वोपकारिणम् ॥
एवमुक्तस्तु सौमित्री राघवेण महात्मना ।
तथेत्युक्त्वा सुसंहृष्टः सौवर्णं घटमाददे ।
घटेन तेन सौमित्रिरभ्यषिञ्चद्विभीषणम् ।
लङ्कायां रक्षसां मध्ये राजानं रामशासनात् ॥
अभ्यषिञ्चंस्तदा सर्वे राक्षसा वानरास्तथा ।
ततस्तेनाभ्यनुज्ञातो हनूमान्वृक्षवाटिकाम् ॥
संप्रविश्य यथान्यायं सीताया विदितो हरिः ।
रामस्य वचनं सर्वमाख्यातुमुपचक्रमे ॥
वैदेहि कुशली रामः सुग्रीवः सहलक्ष्मणः ।
कुशलं त्वाह सिद्धार्थो हतशत्रुरमित्रजित् ॥
विभीषणसहायेन रामेण हरिभिः सह ।
निहतो रावणो देवि लक्ष्मणेन च वीर्यवान् ॥
अथोवाच पुनः सीतामसंभ्रान्तो विनीतवत् ।
प्रगृहीताञ्जलिर्हर्षात्सीतायाः प्रमुखे स्थितः ॥
इमास्तु खलु राक्षस्यो यदि त्वमनुमन्यसे ।
हन्तुमिच्छामि ताः सर्वा याभिस्त्वं तर्जिता पुरा ॥

इत्युक्ता सा हनुमता कृपणा दीनवत्सला ।
हनूमन्तमुवाचेदं चिन्तयित्वा विमृश्य च ॥
राजसंश्रयवश्यानां कुर्वतीनां पराज्ञया ।
विधेयानां च दासीनां कः कुप्येद्वानरोत्तम ॥
भाग्यवैषम्यदोषेण पुरस्ताद्दुष्कृतेन च ।
मयैतत्प्राप्यते सर्वं स्वकृतं ह्युपभुज्यते ॥
मैवं वद महाबाहो दैवी ह्येषा परा गतिः ।
प्राप्तव्यं तु दशायोगान्मयैतदिति निश्चितम् ॥
दासीनां रावणस्याहं मर्षयामीह दुर्बला ।
आज्ञप्ता राक्षसेनेह राक्षस्यस्तर्जयन्ति माम् ॥
हते तस्मिन्न कुर्वन्ति तर्जनं मारुतात्मज ।
एवमुक्तस्तु हनुमान्सीतया वाक्यकोविदः ॥
प्रत्युवाच ततः सीतां रामपत्नीमनिन्दिताम् ।
युक्ता रामस्य भवती धर्मपत्नी गुणान्विता ॥
प्रतिसंदिश मां देवि गमिष्ये यत्र राघवः ।
तमुवाच महाप्राज्ञः सोऽभिवाद्य प्लवंगमः ॥
रामं कमलपत्राक्षं वरं सर्वधनुष्मताम् ।
यन्निमित्तोऽयमारम्भः कर्मणां यः फलोदयः ॥
तां देवी शोकसंतप्तां द्रष्टुमर्हसि मैथिलीम् ।
एवमुक्तो हनुमता रामो धर्मभृतां वरः ॥
अगच्छत्सहसा ध्यानमीषद्बाष्पपरिप्लुतः ।
स दीर्घमभिनिःश्वस्य जगतीमवलोकयन् ॥

उवाच मेघसंकाश विभीषणमुपस्थितम् ।
इह सीतां शिरःस्नातामुपस्थापय मा चिरम् ॥
प्रविश्यान्त पुरं सीतां स्त्रीभि॰ स्वाभिरचोदयन् ।
तत॰ सीतां महाभागां दृष्ट्वोवाच विभीषणः ॥
यानमारोह भद्रं ते भर्ता त्वां द्रष्टुमिच्छति ।
ततः सीतां शिरःस्नातां संयुक्तां प्रतिकर्मणा ॥
आरोप्य शिबिका सीतां राक्षसैर्वहनोचितैः ।
राक्षसैर्बहुभिर्गुप्तामाजहार विभीषणः ॥
सोऽभिगम्य महात्मानं ज्ञात्वापि ध्यानमास्थितम् ।
प्रणतश्च प्रहृष्टश्च प्राप्तां सीतां न्यवेदयन ॥
ततो यानगतां सीतां सविमर्श विचारयन् ।
विभीषणमिदं वाक्यमहृष्टो राघवोऽब्रवीत् ॥
विसृज्य शिबिकां तस्मात्पद्भ्यामेवापसर्पतु ।
समीपे मम वैदेही पश्यन्त्वेते वनौकसः ॥
एवमुक्तस्तु रामेण सविमर्शो विभीषणः ।
रामस्योपानयत्सीतां संनिकर्ष विनीतवत् ॥
लज्जया त्ववलीयन्ती स्वेषु गात्रेषु मैथिली ।
विभीषणेनानुगता भर्तारं साभ्यवर्तत ॥
तां तु पार्श्वे स्थितां प्रह्वां रामः संप्रेक्ष्य मैथिलीम् ।
हृदयान्तगर्तं भावं व्याहर्तुमुपचक्रमे ॥
एषासि निर्जिता भद्रे शत्रुं जित्वा रणाजिरे ।
अद्य मे पौरुषं दृष्टमद्य मे सफलः श्रमः ॥

अथ तीर्णप्रतिज्ञोऽहं प्रभवाम्यद्य चात्मन ।
विदितश्चास्तु भद्रं ते योऽय रणपरिश्रम ॥
सुतीर्ण सुहृदां वीर्यान्न त्वदर्थ मयाकृत. ।
रक्षता तु मया वृत्तमपवादं च सर्वत ॥
प्रख्यातस्यात्मवंशस्य न्यङ्गं च परिमार्जता ।
प्राप्तचारित्रसंदेहा मम प्रतिमुखे स्थिता ॥
दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढा ।
तद्गच्छ त्वानुजानेऽद्य यथेष्ट जनकात्मजे ॥
एता दशदिशो भद्रे कार्यमस्ति न मे त्वया ।
ततः प्रियार्हश्रवणा तदप्रिय प्रियादुपश्रुत्य चिरस्य मानिनी ।
मुमोच बाष्पं रुदती तदा भृशं गजेन्द्रहस्ताभिहतेव वल्लरी ॥
सा तदश्रुतपूर्वं हि जने महति मैथिली ।
श्रुत्वा भर्तुर्वचो घोरं लज्जयावनताभवत् ॥
शनैर्गद्गदया वाचा भर्तारमिदमब्रवीत् ।
किंमामसदृशं वाक्यंमीदृशं श्रोत्रदारुणम् ।
रुक्ष श्रावयसे वीर प्राकृत प्राकृतामिव ॥
प्रत्ययं गच्छ मे स्वेन चारित्रेणैव ते शपे ॥
पृथक् स्त्रीणां प्रचारेण जातित्वं परिशङ्कसे ।
परित्यजैनां शङ्कान्तु यदि तेऽहं परीक्षिता ॥
यदहं गात्रसंस्पर्श गतास्मि विवशा प्रभो ।
कामकारो न मे तत्र दैवं तत्रापराध्यति ॥
प्रेषितस्ते महावीरो हनुमानवलोकक: ।

लङ्कास्थाह त्वया राजन् किं तदा न विसर्ज्जिता ।
प्रत्यक्षं वानरस्यास्य तद्वाक्यं समनन्तरम् ॥
त्वया सत्यक्तया वीर त्यक्तं स्याज्जीवित मया ।
त्वया तु नृपशार्दूल रोषमेवानुवर्त्तता ॥
लघुनेव मनुष्येण स्त्रीत्वमेव पुरस्कृतम् ।
अपदेशो मे जनका न्नोत्पत्तिर्वसुधातलात् ।
मम वृत्तञ्च वृत्तज्ञ बहु तेन पुरस्कृतम् ॥
न प्रमाणीकृतः पाणिर्बाल्ये मम निपीडित ।
मम भक्तिश्च शीलं च सर्वं ते पृष्ठत· कृतम ॥
इति ब्रुवन्ती रुदती बाष्पगद्गदभाषिणी ।
उवाच लक्ष्मणं सीता दीनं ध्यानपरायणम् ॥
चिता मे कुरु सौमित्रे व्यसनस्यास्य भेषजम् ।
स विज्ञाय मनश्छन्दं रामस्याकारसूचितम ।
चितां चकार सौमित्रिर्मते रामस्य वीर्यवान् ॥
प्रणम्य दैवतेभ्यश्च ब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपतः॥
यथा मे हृदयं नित्यं नापसर्पति राघवात् ।
तथा लोकस्य साक्षी मां सर्वतः पातु पावक· ॥
एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम ।
विवेश ज्वलनं दीप्तं निःशङ्केनान्तरात्मना ॥
विधूयाथ चितां तां तु वैदेहीं हव्यवाहन. ।
उत्तस्थौ मूर्तिमानाशु गृहीत्वा जनकात्मजाम ॥

अक्लिष्टमाल्याभरणां तथारूपामनिन्दिताम् ।
ददौ रामाय वैदेहीमङ्के कृत्वा विभावसु. ॥
अब्रवीत्तु तदा रामं साक्षी लोकस्य पावकः ।
एषा ते राम वैदेही पापमस्या न विद्यते ॥
विशुद्धभावां निष्पापा प्रतिगृह्णीष्व मैथिलीम् ।
एवमुक्तो महातेजा धृतिमानुरुविक्रम ।
उवाच त्रिदशश्रेष्ठ रामो धर्मभृतां वर. ॥
अवश्य चापि लोकेषु सीता पावनमर्हति ।
दीर्घकालोषिता हीय रावणान्त पुरं शुभा ॥
बालिशो बत कामात्मा रामो दशरथात्मज ।
इति वक्ष्यति मां लोको जानकीमविशोध्य हि ॥
अनन्यहृदयां सीता मच्चित्तपरिरक्षिणीम ।
अहमप्यवगच्छामि मैथिलीं जनकात्मजाम् ॥
विशुद्धा त्रिषु लोकेषु मैथिली जनकात्मजा ।
न विहातुं मया शक्या कीर्तिरात्मवता यथा ॥
अवश्य च मया कार्यं सर्वेषां वो वचो हितम् ।
स्निग्धानां लोकनाथानामेवं च वदतां हितम् ॥
कृतं कर्म्म यश.साध्य प्राप्तं ते शत्रुसूदन ।
भ्रातृभि सह राज्यस्थो दीर्घमायुरवाप्नुहि ॥
कर्तव्योन तु वैदेहि मन्युस्त्याग मिमं प्रति ।
रामेणेदं विशुद्ध्यर्थं कृतं वै त्व द्धितैषिणा ॥
इति प्रतिसमादिश्य पुत्रौ सीताञ्च राघवः ।

इन्द्रलोकं विमानेन ययौ दशरथो नृप. ॥

प्रतिप्रयाते काकुत्स्थे महेन्द्रः पाकशासनः ।

अब्रवीत्परमप्रीतो राघवं प्राञ्जलिं स्थितम् ॥

अमोघं दर्शनं राम तवास्माकं नरर्षभ ।

प्रीतियुक्ता' स्म तेन त्व ब्रूहि यन्मनसेप्सितम् ॥

एवमुक्तो महेन्द्रेण प्रसन्नेन महात्मना ।

सुप्रसन्नमना हृष्टो वचनं प्राह राघवः ॥

यदि प्रीतिः समुत्पन्ना मयि ते विबुधेश्वर ।

वक्ष्यामि कुरु मे सत्य' वचनं वदतां वर ॥

मम हेतोः पराक्रान्ता ये गता यमसादनम् ।

ते सर्वे जीवित प्राप्य समुत्तिष्ठन्तु वानराः

मत्कृते विप्रयुक्ता ये पुत्रैर्दारैश्च वानरा' ।

तान्प्रीतमनस. सर्वान्द्रष्टुमिच्छामि मानद ॥

अकाले चापि पुष्पाणि मूलानि च फलानि च ।

नद्यश्च विमलास्तत्र तिष्ठेयुर्यत्र वानराः ॥

श्रुत्वा तु वचनं तस्य राघवस्य महात्मनः ।

महेन्द्रः प्रत्युवाचेदं वचनं प्रीतिसंयुतम् ॥

महानयं वरस्तात यस्त्वयोक्तो रघूत्तम ।

द्विर्मया नोक्तपूर्व च तस्मादेतद्भविष्यति ॥

बभूवुर्वानराः सर्वे किं त्वेतदिति विस्मिताः ।

काकुत्स्थं परिपूर्णार्थं दृष्ट्वा सर्वे सुरोत्तमाः ॥

अब्रुवन्परमप्रीता. स्तुत्वा रामं सलक्ष्मणम् ।

गच्छायोध्यामितो राजन्विसर्जय च वानरान् ॥

मैथिलीं सान्त्वयस्वैनामनुरक्तां यशस्विनीम ।

भ्रातरं भरत पश्य त्वच्छोकाद्व्रतचारिणम ॥

शत्रुघ्नं च महात्मानं मातॄः सर्वाः परंतप ।

अभिषेचय चात्मानं पौरान्गत्वा प्रहर्षय ॥

एवमुक्त्वा सहस्राक्षो रामं सौमित्रिणा सह ।

विमानैः सूर्यसंकाशैर्ययौ हृष्टः सुरैः सह ॥

अभिवाद्य च काकुत्स्थः सर्वांस्तांस्त्रिदशोत्तमान ।

लक्ष्मणेन सह भ्राात्रा वासमाज्ञापयत्तदा ॥

ततस्तु सा लक्ष्मणरामपालिता महाचमूर्हृष्टजना यशस्विनी।

श्रिया ज्वलन्ती विरराज सर्वतो निशाप्रणीतेव हि शीतरश्मिना॥

तां रात्रिमुषितं रामं सुखोदितमरिंदमम ।

अब्रवीत्प्राञ्जलिर्वाक्यं जयं पृष्ट्वा विभीषणः ॥

अर्हं ते यद्यनुग्राह्यो यदि स्मरसि मे गुणान ।

वस तावदिह प्राज्ञ यद्यस्ति मयि सौहृदम् ॥

लक्ष्मणेन सह भ्रात्रा वैदेह्या भार्यया सह ।

एवमुक्तस्ततो रामः प्रत्युवाच विभीषणम् ।

रक्षसां वानराणां च सर्वेषामेव शृण्वताम् ॥

पूजितोऽस्मि त्वया वीर साचिव्येन परेण च ।

न खल्वेतन्न कुर्यां ते वचनं राक्षसेश्वर ।

तं तु मे भ्रातरं द्रष्टुं भरतं त्वरते मनः ॥

मां निवर्तयितुं योऽसौ चित्रकूटमुपागतः ।

शिरसा याचतो यस्य वचनं न कृतं मया ॥
कौसल्यां च सुमित्रां च कैकेयीं च यशस्विनीम् ।
गुहं च सुहृदं चैव पौरान्जानपदैः सह ॥
अनुजानीहि मां सौम्य पूजितोऽस्मि विभीषण ।
मन्युर्न खलु कर्तव्यः सखे त्वां चानुमानये ॥
उपस्थापय मे शीघ्रं विमानं राक्षसेश्वर ।
कृतकार्यस्य मे वासः कथं स्यादिह संमतः ॥
एवमुक्तस्तु रामेण राक्षसेन्द्रो विभीषणः ।
विमानं सूर्यसंकाशमाजुहाव त्वरान्वितः ॥
उपस्थितमनाधृष्यं तद्विमानं मनोजवम् ।
निवेदयित्वा रामाय तस्थौ तत्र विभीषणः ॥
तत्पुष्पकं कामगमं विमानमुपस्थितं भूधरसंनिकाशम् ।
दृष्ट्वा तदा विस्मयमाजगाम रामः ससौमित्रिरुदारसत्त्वः ॥
आरुरोह तदा रामस्तद्विमानमनुत्तमम् ।
अङ्केनादाय वैदेहीं लज्जमानां मनस्विनीम् ॥
लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता ।
अब्रवीत्स विमानस्थः पूजयन्सर्ववानरान् ॥
सुग्रीवं च महावीर्यं काकुत्स्थः सविभीषणम् ।
अयोध्यां प्रति यास्यामि राजधानीं पितुर्मम ॥
अभ्यनुज्ञातुमिच्छामि सर्वानामन्त्रयामि वः ।
एवमुक्तास्तु रामेण हरीन्द्रा हरयस्तथा ॥
ऊचुः प्राञ्जलयः सर्वे राक्षसश्च विभीषणः ।

अयोध्यां गन्तुमिच्छामः सर्वान्नयतु नो भवान् ॥
मुद्युक्ता विचरिष्यामो वनान्युपवनानि च ।
अब्रवीद्वानरान्रामः ससुग्रीवविभीषणान् ॥
प्रियात्प्रियतरं लब्ध यदहं ससुहृज्जनः ।
सर्वैर्भवद्भिः सहितः प्रीतिं लप्स्ये पुरीं गतः ॥
क्षिप्रमारोह सुग्रीव विमानं सह वानरैः ।
त्वमप्यारोह सामात्यो राक्षसेन्द्र विभीषण ॥
ततः सपुष्पकं दिव्यं सुग्रीवः सहवानरैः ।
आरुरोह मुदा युक्तः सामात्यश्च विभीषणः ॥
तेष्वारूढेषु सर्वेषु कौबेरं परमासनम् ।
राघवेणाभ्यनुज्ञातमुत्पपात विहायसम् ॥
पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः ।
अब्रवीन्मैथिलीं सीतां रामः शशिनिभाननाम् ॥
कैलासशिखराकारे त्रिकूटशिखरे स्थिताम् ।
लङ्कामीक्षस्व वैदेहि निर्मितां विश्वकर्मणा ॥
एतदायोधनं पश्य मांसशोणितकर्दमम् ।
हरीणां राक्षसानां च सीते विशसनं महत् ॥
एष सेतुर्मया बद्धः सागरे लवणार्णवे ।
तव हेतोर्विशालाक्षि नलसेतुः सुदुष्करः ॥
एषा सा दृश्यते सीते किष्किन्धा चित्रकानना ।
सुग्रीवस्य पुरी रम्या यत्र वाली मया हतः ॥
अत्राहं वानरेन्द्रेण सुग्रीवेण समागतः ।

एषा सा दृश्यते पम्पा नलिनी चित्रकानना ॥
त्वया विहीनो यत्राहं विललाप सुदु:खितः ।
एतत्तदाश्रमपदमस्माकं वरवर्णिनि ॥
पर्णशाला तथा चित्रा दृश्यते शुभदर्शने ।
अगस्त्यस्याश्रमश्चैव दृश्यते कदलीवृतः ॥
असौ सुतनु शैलेन्द्रश्चित्रकूटः प्रकाशते ।
अत्र मां कैकयीपुत्रः प्रसादयितुमागतः ॥
इयं च दृश्यते गङ्गा पुण्या त्रिपथगा नदी ।
शृङ्गवेरपुरं चैतद् गुहो यत्र सखा मम ॥
एषा सा दृश्यते सीते राजधानी पितुर्मम ।
अयोध्यां कुरु वैदेहि प्रणामं पुनरागता ॥
अयोध्यां तु समालोक्य चिन्तयामास राघवः ।
प्रियकामः प्रियं रामस्ततस्त्वरितविक्रमः ॥
अयोध्यां त्वरितो गत्वा शीघ्रं प्लवगसत्तम ।
जानीहि कच्चित्कुशली जनो नृपतिमन्दिरे ॥
शृङ्गवेरपुरं प्राप्य गुहं गहनगोचरम् ।
निषादाधिपतिं ब्रूहि कुशलं वचनान्मम ॥
अयोध्यायाश्च ते मार्गं प्रवृत्तिं भरतस्य च ।
निवेदयिष्यति प्रीतो निषादाधिपतिर्गुहः ॥
भरतस्तु त्वया वाच्यः कुशलं वचनान्मम ।
सिद्धार्थं शंस मां तस्मै सभार्यं सहलक्ष्मणम् ॥
उपयातं च मां सौम्य भरताय निवेदय ।

सह राक्षसराजेन हरीणामीश्वरेण च ॥
एतच्छ्रुत्वा यमाकार भजते भरतस्ततः ।
स च ते वेदितव्य· स्यात्सर्व यच्चापि मां प्रति ॥
सर्वकामसमृद्धं हि हस्त्यश्वरथसंकुलम् ।
पितृपैतामहं राज्य' कस्य नावर्तयेन्मन. ॥
अथोत्पपात वेगेन हनूमान्मारुतात्मजः ।
शृङ्गवेरपुरं प्राप्य गुहमासाद्य वीर्यवान् ॥
स वाचा शुभया हृष्टो हनूमानिदमब्रवीत् ।
सखा तु तव काकुस्थो राम· सत्यपराक्रमः ॥
ससीतः सह सौमित्रि. स त्वां कुशलमब्रवीत् ।
पञ्चमीमद्य रजनीमुपित्वा वचनान्मुनेः ॥
भरद्वाजाभ्यनुज्ञातं द्रक्ष्यस्यत्रैव राघवम् ।
एवमुक्त्वा महातेजाः संप्रहृष्टतनूरुहः ॥
उत्पपात महावेगाद्वेगवानविचारयन् ।
स गत्वा दूरमध्वानं त्वरित· कपिकुञ्जरः ॥
आससाद द्रुमान्फुल्लान्नन्दिग्रामसमीपगान् ।
ददर्श भरतं दीनं कृशमाश्रमवासिनम् ॥
जटिलं मलदिग्धाङ्गं भ्रातृव्यसनकर्शितम् ।
पादुके ते पुरस्कृत्य प्रशासन्तं वसुंधराम् ॥
तं धर्ममिव धर्मज्ञ' देहबन्धमिवापरम् ।
उवाच प्राञ्जलिर्वाक्यं हनूमान्मारुतात्मजः ॥
वसन्त' दण्डकारण्ये यं त्व' चीरजटाधरम् ।

अनुशोचसि काकुत्स्थ स त्वां कौशलमब्रवीत् ।
प्रियमाख्यामि ते देव शोकं त्यज सुदारुणम् ॥
अस्मिन्मुहूर्ते भ्रात्रा त्वं रामेण सह संगतः ।
निहत्य रावणं रामः प्रतिलभ्य च मैथिलीम् ॥
उपयाति समृद्धार्थः सह मित्रैर्महाबलैः ।
लक्ष्मणश्च महातेजा वैदेही च यशस्विनी ॥
एवमुक्तो हनुमता भरतः कैकयीसुतः ।
पपात सहसा हृष्टो हर्षान्मोहमुपागमत् ॥
निशम्य रामागमनं नृपात्मजः कपिप्रवीरस्य तदाद्भुतोपमम् ।
प्रहर्षितो रामदिदृक्षयाभवत्पुनश्च हर्षादिदमब्रवीद्वचः ॥
बहूनि नाम वर्षाणि गतस्य सुमहद्वनम् ।
शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम् ॥
कल्याणी बत गाथेयं लौकिकी प्रतिभाति माम् ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥
राघवस्य हरीणां च कथमासीत्समागमः ।
कस्मिन्देशे किमाश्रित्य तत्त्वमाख्याहि पृच्छतः ॥
स पृष्टो राजपुत्रेण बृस्यां समुपवेशितः ।
आचचक्षे ततः सर्वं रामस्य चरितं वने ॥
श्रुत्वा तु परमानन्दं भरतः सत्यविक्रमः ।
हृष्टमाज्ञापयामास शत्रुघ्नं परवीरहा ॥
दैवतानि च सर्वाणि चैत्यानि नगरस्य च ।
सुगन्धमाल्यैर्वादित्रैरर्चन्तु शुचयो नराः ॥

सूताः स्तुतिपुराणज्ञाः सर्वे वैतालिकास्तथा ।
सर्वे वादित्रकुशला गणिकाश्चैव सर्वश ॥
राजदारास्तथामात्याः सैन्या सेनाङ्गनागणाः ।
ब्राह्मणाश्च सराजन्याः श्रेणीमुख्यास्तथा गणाः ॥
अभिनिर्यान्तु रामस्य द्रष्टुं शशिनिभ मुखम् ।
भरतस्य वचः श्रुत्वा शत्रुघ्न परवीरहा ॥
विष्टीरनेकसाहस्रीश्चोदयामास भागशः ।
समीकुरुत निम्नानि विषमाणि समानि च ॥
ततोऽभ्यवकिरन्त्वन्ये लाजैः पुष्पैश्च सर्वतः ।
समुच्छ्रितपताकास्तु रथ्याः पुरवरोत्तमे ॥
प्राञ्जलिर्भरतो भूत्वा प्रहृष्टो राघवोन्मुखः ।
यथार्थेनार्घ्यपाद्याद्यैस्ततो राममपूजयत् ॥
ववन्दे प्रणतो रामं मेरुस्थमिव भास्करम् ॥
ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् ।
हंसयुक्त महावेगं निपपात महीतलम् ॥
आरोपितो विमानं तद्भरतः सत्यविक्रमः ।
राममासाद्य मुदितः पुनरेवाभ्यवादयन् ॥
तं समुत्थाय काकुत्स्थश्चिरस्याक्षिपथं गतम् ।
अङ्के भरतमारोप्य मुदितः परिषस्वजे ॥
ततो लक्ष्मणमासाद्य वैदेहीं च परंतपः ।
अथाभ्यवादयत्प्रीतो भरतो नाम चाब्रवीत् ॥
सुग्रीवं कैकयीपुत्रो जाम्बवन्तमथाङ्गदम् ।

मैन्दं च द्विविदं नीलमृषभ चैव षस्वजे ॥
सुषेण च नलं चैव गवाक्ष गन्धमादनम् ।
शरभं पनसं चैव परितः परिषस्वजे ॥
ते कृत्वा मानुषं रूपं वानराः कामरूपिण ।
कुशल पर्यपृच्छंस्ते प्रहृष्टा भरतं तदा ॥
रामो मातरमासाद्य विवर्णां शोककर्शिताम् ।
जग्राह प्रणत. पादौ मनो मातुः प्रहर्षयन् ॥
अभिवाद्य सुमित्रां च कैकेयीं च यशस्विनीम् ।
स मातॄश्च ततः सर्वाः पुरोहितमुपागमत् ॥
स्वागतं ते महाबाहो कौसल्यानन्दवर्धन ।
इति प्राञ्जलय सर्वे नागरा राममब्रुवन् ॥
पादुके ते तु रामस्य गृहीत्वा भरतः स्वयम् ।
चरणाभ्यां नरेन्द्रस्य योजयामास धर्मवित् ॥
अब्रवीच्च तदा रामं भरतः स कृताञ्जलिः ।
एतत्ते सकलं राज्यं न्यासं निर्यातितं मया ॥
अद्य जन्म कृतार्थं मे संवृत्तश्च मनोरथ ।
यत्त्वां पश्यामि राजानमयोध्यां पुनरागतम् ॥
भरताश्रममासाद्य ससैन्यो राघवस्तदा ।
अवतीर्य विमानाग्रादवतस्थे महीतले ॥
अब्रवीत्तु तदा रामस्तद्विमानमनुत्तमम् ।
वह वैश्रवणं देवमनुजानामि गम्यताम् ॥
ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् ।

उत्तरां दिशमुद्दिश्य जगाम धनदालयम् ॥
शिरस्यञ्जलिमाधाय कैकेयीनन्दिवर्धनः ।
बभाषे भरतो ज्येष्ठं रामं सत्यपराक्रमम् ॥
पूजिता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ॥
जगदद्याभिषिक्तं त्वामनुपश्यतु राघव ।
प्रतपन्तमिवादित्यं मध्याह्ने दीप्ततेजसम् ॥
भरतस्य वचः श्रुत्वा रामः परपुरंजयः ।
तथेति प्रतिजग्राह निषसादासने शुभे ॥
अयोध्यायां च सचिवा राज्ञो दशरथस्य च ।
पुरोहितं पुरस्कृत्य मन्त्रयामासुरर्थवत् ॥
सर्वमेवाभिषेकार्थं जयार्हस्य महात्मनः ।
कर्तुमर्हथ रामस्य यद्यन्मङ्गलपूर्वकम् ॥
इति ते मन्त्रिणः सर्वे संदिश्य च पुरोहितः ।
नगरान्निर्ययुस्तूर्णं रामदर्शनबुद्धयः ॥
हरियुक्तं सहस्राक्षो रथमिन्द्र इवानघः ।
प्रययौ रथमास्थाय रामो नगरमुत्तमम् ॥
जग्राह भरतो रश्मीञ्शत्रुघ्नश्छत्रमाददे ।
लक्ष्मणो व्यजनं तस्य मूर्ध्नि संवीजयंस्तदा ॥
श्वेतं च वालव्यजनं जगृहे परितः स्थितः ।
अपरं चन्द्रसंकाशं राक्षसेन्द्रो विभीषणः ॥
अभिषेकाय रामस्य शत्रुघ्नः सचिवैः सह ।

पुरोहिताय श्रेष्ठाय सुहृद्भ्यश्च न्यवेदयत् ॥
ततः स प्रयतो वृद्धो वसिष्ठो ब्राह्मणैः सह ।
रामं रत्नमये पीठे ससीतं संन्यवेशयत् ॥
वसिष्ठो विजयश्चैव जाबालिरथ काश्यपः ।
कात्यायनो गौतमश्च वामदेवस्तथैव च ॥
अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना ।
सलिलेन सहस्राक्षं वसवो वासवं यथा ॥
ऋत्विग्भिर्ब्राह्मणैः पूर्वं कन्याभिर्मन्त्रिभिस्तथा ।
योधैश्चैवाभ्यषिञ्चंस्ते संप्रहृष्टैः सनैगमैः ॥
किरीटेन ततः पश्चाद्वसिष्ठेन महात्मना ।
ऋत्विग्भिर्भूषणैश्चैव समयोक्ष्यत राघवः ॥
छत्रं तस्य च जग्राह शत्रुघ्नः पाण्डुरं शुभम् ।
श्वेतं च वालव्यजनं सुग्रीवो वानरेश्वरः ॥
अपरं चन्द्रसंकाशं राक्षसेन्द्रो विभीषणः ।
प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥
अभिषेके तदर्हस्य तदा रामस्य धीमतः ।
भूमिः सस्यवती चैव फलवन्तश्च पादपाः ॥
गन्धवन्ति च पुष्पाणि बभूवू राघवोत्सवे ।
विभीषणोऽथ सुग्रीवो हनूमाञ्जाम्बवांस्तथा ।
सर्वे वानरमुख्याश्च रामेणाक्लिष्टकर्मणा ॥
यथार्हं पूजिताः सर्वे कामै रत्नैश्च पुष्कलैः ।
प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम् ॥

स राज्य मखिलं शासन्निहतारि र्महायशा ।
राघवः परमोदार. शशाम परया मुदा ॥
राघवश्चापि धर्मात्मा प्राप्य राज्यमनुत्तमम् ।
ईजे बहुविधैर्यज्ञैः ससुतभ्रातृबान्धव' ॥
न पर्यदेवन्विधवा न च व्यालकृतं भयम् ।
न व्याधिजं भयं चासीद्रामे राज्यं प्रशासति ॥
निर्दस्युरभवल्लोको नानर्थं कश्चिदस्पृशन् ।
न च स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥
सर्वं मुदितमेवासीत्सर्वो धर्मपराऽभवन् ।
राममेवानुपश्यन्तो नाभ्यहिंसन्परस्परम् ॥

इति ।